# उत्तिष्ठत ! मा स्वप्त !!

चमू कृष्णशास्त्री

संस्कृतभारती
बेङ्गलूरु

# प्रकाशकवचनम्

*संस्कृतक्षेत्रं सूक्ष्मेक्षिकया पश्यामः चेत् स्पष्टं भवति यत् एतत् क्षेत्रं जागरणसम्पन्नं नास्ति इति । जागरणं सर्वथा नास्ति इति न । यावता प्रमाणेन भवेत् तावता प्रमाणेन तु नास्ति । अदूरदर्शिता, योग्यस्य नेतृत्वस्य अभावः, समुचितायाः कार्ययोजनायाः अभावः इत्यादीनां कारणतः संस्कृतक्षेत्रं व्याधिग्रस्तम् इव जातम् अस्ति । दूरदर्शिता यदि न भवति तर्हि योग्याः कार्ययोजनाः अपि न भवन्ति । तासाम् अभावे अपेक्षितानि फलानि न प्राप्यन्ते ।*

*वयं संस्कृतज्ञाः स्ववृत्तिमात्रे आसक्ताः । वृत्तिमात्रं मम कार्यम् उत कर्तव्यान्तरं किमपि अन्यत् अस्ति इति कदापि न चिन्तयामः वयम् । यदा कापि समस्या बाधते तदा नेतॄणां निन्दनं कुर्वन्तः, सर्वकारस्य पुरतः अभियाचनाम् उपस्थापयन्तः, समस्यायाः परिहाराय मार्गम् अपश्यन्तः खेदेनैव दिनानि यापयामः । कर्तव्यं सदापि श्रमं जनयेत् एव । स च 'श्रमः' अस्माभिः न इष्यते । अतः तस्य श्रमस्यैव निवारणाय विविधान् उपायान् चिन्तयामः वयं, न तु समस्यानां निवारणाय । अस्माकम् अभियाचनाः अपि दूरदृष्टिसमन्विताः न भवन्ति । कार्ययोजना अपि फलैकहेतुका न भवति । एतत् मनसि निधायैव उक्तं – योग्यं जागरणं नास्ति इति । दौर्भाग्यं नाम जागरयिता अपि विरललभ्यः एव ।*

*एतस्मिन् पुस्तके स्थिताः कृष्णशास्त्रिवर्यस्य लेखाः तत् जागरणकार्यम् एव कुर्वन्ति । शास्त्रिवर्यस्य लेखन्याः तीक्ष्णता संस्कृतज्ञैः सर्वैः ज्ञायते एव प्रायः । संस्कृतक्षेत्रस्य विविधानां मुखानां समुचितं विश्लेषणं कृतम् अस्ति एतेषु लेखेषु ।*

*अत्र उपयुक्ता भाषा न प्रौढा । आधिक्येन भाषणशैली एव आदृता । विषयनिरूपणस्यैव प्राधान्यं कल्पितं, न तु शैलीसौन्दर्यादीनाम् । एते सर्वे लेखाः इतः पूर्वं सम्भाषणसन्देशे प्रकाशिताः आसन् एव । लेखनानां सार्वकालिकतां सार्वदेशिकतां च मनसि निधाय एषः पुस्तकप्रकाशनरूपः*

*प्रयासः कृतः । पुस्तकमेतत् कार्यकर्तॄणां सर्वेषां मोदाय प्रेरणायै च भवेत् इति भावयामः वयम् ।*

*एतस्य सज्जीकरणे प्रकाशने च साह्यं कृतवन्तः सर्वेऽपि कृतज्ञापूर्वकं स्मर्यन्ते ।*

तारण सं ।। भाद्रपदपूर्णिमा
२८.९.०४

**– प्रकाशकः**

# अनुक्रमणिका

**चमू कृष्णशास्त्रिवर्यस्य कृतयः**

सङ्क्रमणम्

परिवर्तनम्

ज्ञाने धर्मः उत प्रयोगे

संस्कृतं - स्वाट् असेस्मेण्ट्

**भवद्धस्तगता कृतिः**

उत्तिष्ठत ! मा स्वप्त !!

# १. उत्तिष्ठत ! मा स्वप्त !!

मध्यप्रदेशे शासकीयसंस्कृतमहाविद्यालयाः नव सन्ति । तेषां सर्वेषां संस्कृतमहाविद्यालयानां प्राचार्याः सर्वदा एव संस्कृतेतर-विषयज्ञाः, तन्नाम इतिहासप्राध्यापकः, वाणिज्यप्राध्यापकः, विज्ञान-प्राध्यापकः इत्यादयः एव भवन्ति, न तु संस्कृतज्ञाः । यः प्रतिनियुक्तेः द्वारा आगतः, यस्य संस्कृतविषयकं ज्ञानं शून्यं, यस्य संस्कृत-विषयिका रुचिः सूक्ष्मदर्शकयन्त्रेण अन्वेष्टव्या भवेत्, यः जीवने संस्कृतगन्धमपि न आघ्रातवान्, तादृशः प्राचार्यः संस्कृतच्छात्रेभ्यः कां वा प्रेरणां दद्यात्, कीदृशं मार्गदर्शनं वा कुर्यात् ? तस्य संस्कृतमहाविद्यालयस्य कीदृशी उन्नतिः भवेत् ? क्वचित् संस्कृत-विश्वविद्यालयस्य कुलपतिः इतिहासज्ञः, क्वचित् राज्यसंस्कृत-शिक्षाधिकारी एव संस्कृतद्वेषी, क्वचित् राज्यसंस्कृत-अकाडमी-निर्देशिका हिन्दीप्राध्यापिका । प्रतिराज्यं प्रतिस्थानम् एतादृशानि उदाहरणानि लभ्यन्ते । स्थालीपुलाकन्यायेन ज्ञातुं शक्यते यत् अद्य संस्कृतं, संस्कृतविषयकनीतिनिर्णायकसमितयः, संस्थाः च कीदृशानां हस्तेषु सन्ति इति ।

मध्यप्रदेशे संस्कृतज्ञाः एव संस्कृतमहाविद्यालयानां प्राचार्याः भवेयुः इत्येतदर्थं प्रयत्नं न कृतवन्तः इति नास्ति । बहुवारं प्रयत्नाः विहिताः । परं सफलता न प्राप्ता । आङ्ग्लेयाः गताः, परं सा आङ्ग्लमानसिकता इतोऽपि वरीवर्तते । तद् मेकालेमानसं सर्वत्र संस्कृतं तिरोदधाति अन्तः नोदयति, अपसारयति, पातयति वा । देशस्य राजनैतिकी स्वतन्त्रता १९४७ तमे वर्षे अभवत् । परन्तु संस्कृतस्य स्वतन्त्रता इतोऽपि न जाता । 'इण्डिया' स्वतन्त्रं, परन्तु 'भारतम्' इतोऽपि अस्वतन्त्रम् । यावत् तद् असंस्कृतं समाजनेतृमानसं संस्कृतं न भवति तावत् संस्कृतभाषा संवृद्धा पल्लविता पुष्पिता च न

भविष्यति । रोगस्य मूलनिदानस्य चिकित्सायोजनाम् अकृत्वा बाह्योपचारचिन्तनं व्यर्थम् । परन्तु मेकाले-इण्डिया-ध्वंसनं न सरलसाध्यं कार्यं, न वा संस्कृतभारत्यैकसाध्यम् । तदिदं पर्वताकारिकायाः शिलायाः व्यावर्तनम् इव सुमहत् कार्यं साधयितुं यजुर्वेदस्य तैत्तिरीयारण्यकस्य २७ तमस्य अनुवाकस्य ११५ तमस्य वर्गस्य अरुणप्रश्नस्य वाक्यखण्डं वयं सर्वदा एव स्मरेम – 'उत्तिष्ठत ! मा स्वप्त !!' इति ।

केन्द्रीयविद्यालयेषु, मध्यप्रदेशसंस्कृतमहाविद्यालयेषु च संस्कृत-शिक्षकाणां पदोन्नतेः अवसराभावः । छत्तीसगढादिषु राज्येषु शास्त्रशिक्षणस्य व्यवस्थायाः एव अभावः । इतरविषयशिक्षकाणाम् अपेक्षया संस्कृतशिक्षकवेतने न्यूनता । समकाले एव उर्दूबोर्ड्, संस्कृतबोर्ड् च घटिते चेदपि उर्दूबोर्ड् इत्यस्य कृते प्रभूतं धनं, परं संस्कृतबोर्ड् इत्यस्य कृते न धनम्, न पदानि अपि सृष्टानि इत्येषा स्थितिः । इतरविषयशिक्षकाणां नियतरूपेण प्रशिक्षणं, न तु संस्कृत-शिक्षकाणाम् । एवंप्रकारेण असंख्याः अन्यायाः जायमानाः एव सन्ति । वयं मूकप्रेक्षकाः स्मः । किमधिकेन, CBSEमध्ये सर्वोच्चन्यायालयस्य संस्कृतपरनिर्णयस्य क्रियान्वयनमेव न भवति आ दशभ्यः वर्षेभ्यः ! कदाचित् मनसि प्रश्नः भवति, किं भगवान् अपि संस्कृतज्ञानां योग्यतानुगुणम् एव संस्कृतज्ञेभ्यः संस्कृताय च स्थानं गौरवं च कल्पयति इति । भोः, मानधनाः संस्कृतज्ञाः ! सत्त्व-शालिनः ! दीपधराः ! सुप्तस्य संस्कृतचेतनस्य जागरणाय लेखन्यस्त्राणाम् अस्माकं मुखं सङ्घोषयत् ध्वनिवर्धकम् इव नित्यं निरन्तरं मधुरं च संस्कृतरवं कुर्वत् स्यात् ! उत्तिष्ठत ! मा स्वप्त !!

पूर्वं स्वातन्त्र्यान्दोलनसमये उर्दूनिष्ठा हिन्दी प्रयोक्तव्या उत संस्कृत-निष्ठा इति चर्चा आसीत् । तमिळनाडुराज्ये तमिळभाषायां संस्कृत-शब्दाः न भवेयुः शुद्धतमिल् एव प्रयोक्तव्या, desanskritisation

करणीयम् इति किञ्चित् आन्दोलनं प्रावर्तत । संस्कृतव्याकरणं मराठ्याः नावश्यकम् इति आन्दोलनं महाराष्ट्रे अपि पूर्वं प्राचलत् । इदानीं कर्णाटकसर्वकारेण राज्ये सार्वजनिकोपयोगाय सर्वेभ्यः निःशुल्करूपेण दीयमाने 'नुडि'नामके कन्नडतन्त्रांशे संस्कृतशब्दाः न भवेयुः, रूढाः आङ्ग्लशब्दाः एव भवन्तु, (यथा Software इत्यस्य तन्त्रांशः इति शब्दः, Hardware इत्यस्य यन्त्रांशः इति शब्दः) संस्कृतशब्दानाम् उपयोगः एषः ब्राह्मणवादः इत्यादिरूपेण किञ्चित् आन्दोलनं प्रवर्तते, केचन न्यायालयमपि गतवन्तः । इदानीं बङ्गराज्ये वामविचारीयेण सर्वकारेण क्रियमाणः प्रयत्नः नाम बङ्गभाषा काचन भिन्ना भाषा, तस्याः संस्कृतेन सह सम्बन्धः नास्ति इति प्रतिष्ठापनम् । एतं प्रयत्नं साकारीकर्तुं तत्रत्येन माध्यमिक-शिक्षाबोर्ड् इत्येतेन 'व्यवहारगतायाः बङ्गभाषायाः किञ्चित् नवीनं व्याकरणं लेखनीयम्, बङ्गभाषा संस्कृतस्य प्रभावतः मुक्ता करणीया' इति आदेशः दत्तः अस्ति । तस्मिन् आदेशपत्रे लिखितम् अस्ति - ''पाठ्यपुस्तकानि व्यवहारगतभाषया लेखनीयानि । प्रतिष्ठितसाहित्यकाराणां रचनाः साधुभाषया सन्ति, तासां व्यवहारगतभाषया परिवर्तनं करिष्यते,... बङ्गभाषया संस्कृतसम्बन्धः त्यक्तव्यः भवेत्, एवञ्च तत्समशब्दानाम् आवश्यकतानुसारं परिवर्तनस्य प्रयासः क्रियेत'' इति । एवंप्रकारेण भारतीयभाषाः संस्कृततः दूरं नेतव्याः इति राज्ये राज्ये प्रयत्नाः प्रचलन्ति । अस्माभिः तु संस्कृतस्य स्थानीयभाषायाः च बान्धव्यवर्धनं करणीयम् इति वयं जानीमः एव । आङ्ग्लशब्दाः, उर्दूशब्दाः, अरेबिक्शब्दाः च भवितुम् अर्हन्ति, परन्तु संस्कृतशब्दाः न ! अहो, संस्कृतभूम्याम् असंस्कृतचिन्तनम् !! समाजविघटन-शक्तयः, राष्ट्रविभाजकतत्त्वानि च स्वीयं धूर्तोद्देश्यं साधयितुं संस्कृतम् अक्षिलक्ष्यीकुर्वन्तः सन्ति । अतः अस्माभिः सावधानैः भाव्यम् । प्रतिदिनं संस्कृतोपरि घातान् आघातान् प्रघातान् च कुर्वन्तः सन्ति ।

भोः संस्कृतानुरागिणः ! यावच्छीघ्रं समाजजागरणं करणीयम् । लक्ष्यपूर्तिपर्यन्तम् अस्माकं न निद्रा, न तन्द्रा । न विरामः, न विश्रामः । न सुखस्य काङ्क्षा, न च कष्टचिन्ता । प्रचार इत्यस्य एकस्यैव शब्दस्य चिन्ता । लक्ष्यैकदृष्टिः, कार्यैकरक्तिः, राष्ट्राय धर्माय च युद्धे सक्तिः । अतः उत्तिष्ठत ! मा स्वप्त !!

संस्कृतस्य ह्रासे बाह्याक्रमणं यावता प्रमाणेन कारणं भवति तावता एव प्रमाणेन ततोऽप्यधिकतया वा, आन्तरिकशैथिल्यम् अपि कारणं भवति । कतिचन उदाहरणानि पश्यन्तु ।

गतेषु पञ्चसु वर्षेषु प्रतिवर्षं जनवरिप्रथमसप्ताहे (भवतु नाम आङ्ग्लवर्षम् इति) अहं कस्यचन संस्कृतविश्वविद्यालयस्य कुलपतेः शुभाशयपत्रं प्राप्नुवन् अस्मि । तत् प्रतिवर्षं सम्पूर्णतया आङ्ग्ल-भाषया एव आसीत् । किन्तु सः कुलपतिः शास्त्रज्ञः, महान् संस्कृतविद्वान्, मम परमश्रद्धेयः च । किञ्च तस्य आङ्ग्लभाषा-व्यामोहः किञ्चिदपि नास्ति । तथापि एवं किमर्थं भवति ?

गते फरवरिमासे अहम् एकं विद्यापीठपरिसरं गतवान् । यावत् अहं कार्यानतः अवतरणं कृतवान् तावता तत्रत्यः कश्चन संस्कृत-प्राध्यापकः मम समीपम् आगत्य उक्तवान् - 'You are most welcome sir' इति । विद्यापीठं प्रविशन् अहं दृष्टवान् मुख्यप्रवेश-द्वारस्य अन्तः स्थिते कृष्णफलके - 'Today's Pogramme' इति । तस्य दिनस्य कार्यक्रमाणां विवरणं सम्पूर्णतया आङ्ग्लभाषया लिखितम् आसीत् तत्र । सभा प्राचलत्, धन्यवादार्पणकारः आङ्ग्लभाषया भाषितवान् । संस्कृतेन क्रियताम् इति अस्माभिः प्रार्थितम् । उत्तरम् आसीत् - 'अत्र संस्कृतेतरजनाः अपि सन्ति' इति । के सन्तीति पृष्टे सति विद्यापीठस्यैव आङ्ग्लभाषाशिक्षकादयः द्वित्राः एव इति ज्ञातम् । तेऽपि मया अनुक्षणं सभायां पृष्टाः यत् किं मम संस्कृतभाषणम् अवगतम् इति । तदा सः आङ्ग्लभाषायाः

व्याख्याता उत्थाय संस्कृतेन उक्तवान् - 'सम्पूर्णतया' इति ! नात्र मम आङ्ग्लविरोधः । परं संस्कृताय अनुरोधः, तावदेव ।

सद्यः अहं ग्रामप्रदेशे विद्यमानायाः कस्याश्चित् संस्कृतपाठशालायाः संस्कृतसप्ताहस्य कार्यक्रमाणां मुद्रितं निमन्त्रणपत्रं प्राप्तवान् यत् च (४ पृष्ठात्मकं) सम्पूर्णतया आङ्ग्लभाषया आसीत् । सा च पाठशाला तस्य राज्यस्य अत्युत्तमासु पञ्चसु पाठशालासु अन्यतमा स्यात् । तस्याम् अध्यापकाः व्युत्पन्नाः सन्ति, छात्राः च व्युत्पन्नाः भवन्ति । तेषु बहवः संस्कृतभारत्याः कार्यकर्तारः एव । संस्कृतसप्ताहस्य आचरणस्य उद्देशः एव दैनन्दिनव्यवहारे संस्कृतम् आनेतव्यम् इति । परम् ...... !

अहं सद्यः सम्भाषणसन्देशस्य सम्पादकेन श्रीमता विश्वासमहोदयेन सह दूरभाषया वार्तालापं करोमि स्म । सः काञ्चित् रोचकघटनां श्रावितवान् । कर्णाटके होसनगरनामके उपमण्डलकेन्द्रे प्रवृत्तं किञ्चित् सामवेदसम्मेलनं सः गतवान् । मध्याह्ने कश्चन परमनैष्ठिकः धृतवैदिकवेषः वेदज्ञः चषकेण जलं पीत्वा अवशिष्टं जलं यावत् क्षिप्तवान् तावता श्रीमान् विश्वासः तत्र मध्ये अकस्मात् एव गच्छति स्म । जलं श्रीविश्वासस्य उपरि अपतिष्यत् । तदा तस्य वेदज्ञस्य मुखात् निःसृतः शब्दः 'Sorry' । तस्मिन् एव दिने तत्र भोजनसमये कश्चन अल्पवयाः वटुः (वेदच्छात्रः) दध्यन्नस्य परिवेषणं कुर्वन् उच्चैः वदति स्म 'Curd rice, Curd rice' इति । राज्यसर्वकारैः प्रथमकक्ष्यातः आङ्ग्लभाषायाः शिक्षणम् आरब्धं, भारतीयभाषासु संस्कृतशब्दान् परित्यज्य आङ्ग्लशब्दाः स्वीक्रियन्ते इत्यस्य अपेक्षया अपि अधिकः चिन्ताजनकः विषयः तु आङ्ग्लशब्दाः मम लेखनम् अपि आधिक्येन प्रविशन्तः सन्ति (?!), पूजागृहम् अपि प्रविशन्तः सन्ति इति । श्वः महाभाष्यम् अपि प्रविशेयुः यदि वयम् अनवधानाः भवेम ! तस्मात् जागृत । मित्राणि

! श्रूयतां सः अपायघण्टानादः ! उत्तिष्ठत ! मा स्वप्त !!

गतेभ्यः आ बहुभ्यः वर्षेभ्यः केन्द्रसर्वकारसमीपे संस्कृतज्ञानां काचित् महती अभियाचना आसीत् । सा नाम - 'केन्द्रसर्वकारस्य शिक्षामन्त्रालयेन पालि-प्राकृत-अरेबिक्-पर्षियन्-भाषाः इव संस्कृत-भाषा अपि 'प्राचीनभाषा (Classical Language)' इति उपवर्णितम् अस्ति, तेन च त्रिभाषासूत्रे आधिकारिकरूपेण संस्कृतस्य स्थानं न भवति । संविधानस्य अष्टमसूच्याः सर्वाः भाषाः आधुनिक-भारतीयभाषाः (Modern Indian Language) इति घोषणीयं, येन संस्कृतस्य स्थानं भवेत्' इति । (नियमानुसारं त्रिभाषासूत्रे प्राचीन-भाषाः न सन्ति, परम् आधुनिकभारतीयभाषाः सन्ति ।) संस्कृत-वर्षानन्तरं तमिळनाडुराज्ये तमिळभाषा प्राचीनभाषा इति केन्द्र-सर्वकारेण उद्घोषणीयम् इति अभियाचना आरब्धा । तत्र तेषाम् आशयः तु - 'इदानीं तमिळभाषा आधुनिकभारतीयभाषाभिः सह अस्ति, यासाम् इतिहासः सहस्र-सहस्रद्वयवर्षपुरातनम् अस्ति । परं तमिळभाषायाः इतिहासः पञ्चषसहस्रवर्षाणाम् अस्ति' इति । (प्राचीनभाषा इति घोषणेन तमिळभाषायाः त्रिभाषासूत्रे स्थानं नष्टं न भवति, यतः तत्र सा मातृभाषाणां सूच्यां भवति ।) तमिळभाषायाः सा अभियाचना इदानीं (सेप्टम्बर्-२००४) केन्द्रसर्वकारेण अङ्गीकृता, येन अस्माकम् अपि सन्तोषः एव, परं संस्कृतस्य अभियाचना सर्वकारेण अद्यपर्यन्तं नाङ्गीकृता अस्ति । विडम्बनं नाम संस्कृतस्य आधुनिकभारतीयभाषाणां सञ्चिकायां सर्वे IAS अधिकारिणः 'परतया' हस्ताक्षरं कृतवन्तः चेदपि, तस्यैव परतया सर्वोच्चन्यायालयस्य निवृत्तमुख्यन्यायाधीशस्य संस्तुतिः आसीत् चेदपि, कृतबहुसंस्कृतपरभाषणः तदानीन्तनः शिक्षामन्त्री हस्ताक्षरम् अकृत्वा 'यदा भवन्तः 'Public Pressure' निर्माणं करिष्यन्ति तदा हस्ताक्षरं करिष्यामि' इति उक्त्वा सञ्चिकां पार्श्वे स्थापितवान् । परं

तमिळभाषायाः प्राचीनभाषात्वघोषणप्रसङ्गे IAS अधिकारिणां विरोधे सत्यपि इदानीन्तनः मन्त्री हस्ताक्षरं कृतवान् । किमर्थम् एवं भवति ? संस्कृतस्य याचनायाः पृष्ठतः शक्तिः नास्ति, जनशक्तिः नास्ति । दुर्बलानां वचनं कः श्रोष्यति ? यावत् वयं महत्याः जनशक्तेः निर्माणं न कुर्मः तावत् संस्कृतस्य अल्पा अपि अभियाचना केनापि न परिगण्येत एव । अतः उत्तिष्ठत ! मा स्वप्त !!

सर्वेषु अपि राज्येषु संस्कृतशिक्षकपदानां महान् अभावः । अन्यविषयशिक्षकाः, अन्यभाषाशिक्षकाः च संस्कृतं पाठयन्ति । विद्यमानानि अपि पदानि शिक्षकाणां निवृत्तेः अनन्तरं पुनः पूरितानि न भवन्ति । कतिचन वर्षाणि यावत् तानि पदानि रिक्तानि स्थापयित्वा पश्चात् छात्राः न सन्ति इति व्याजं प्रदर्श्य अन्यविषयपदरूपेण पदपरिवर्तनं कारयन्ति । एतादृशी संस्कृतस्य दुर्गतिः ! किन्तु अन्यत्र पश्यन्तु - गते अप्रैल्-मइ-२००४-लोकसभानिर्वाचनावसरे राष्ट्रिय-गणतान्त्रिकसंयुतिसर्वकारेण महम्मदीयमतानि प्राप्तव्यानि इति धिया उर्दूजनानाम् अभियाचनायाः, अपेक्षायाः, आवश्यकतायाः च अभावे सत्यपि, पदानाम् अभावे च सत्यपि स्वयंस्फूर्त्या १,२०,००० उर्दूशिक्षकपदानां निर्माणं कृत्वा पूरयिष्यामः इति घोषितम् । अनन्तरम् आगतेन सर्वकारेण प्रथमं कार्यं तदेव कृतम् । अन्यासां भाषाणां प्रोत्साहनम् अवश्यं कुर्वन्तु, तेन अस्माकं प्रमोदः एव । परं संस्कृतविषये किमर्थम् एतादृशी उपेक्षा ? यतः संस्कृतस्य Vote Bank नास्ति । भोः संस्कृतानुरागिणः ! प्रजातन्त्रे किं कार्यं करोति, किं कार्यं न करोति इति इदानीं वा अवगच्छामः । उत्तिष्ठत ! मा स्वप्त !! धावत ! जनसङ्घटनं कुरुत !! महत् सङ्घटनं सङ्घटयत । जनान् प्रबोधयत ! संस्कृतभारतीं पोषयत, संवर्धयत ।

कर्णाटके एतावत्पर्यन्तं प्रथमभाषारूपेण तृतीयभाषारूपेण वा संस्कृतपठनस्य अवसरः आसीत् । संस्कृतस्वीकर्तारः अधिकतया

प्रथमभाषारूपेण पठन्ति स्म । इदानीं २००४-२००५ तमे वर्षे सर्वकारेण नियमः कृतः यत् राज्यसर्वकारीयवृत्तेः प्राप्त्यर्थम् अभ्यर्थिना प्रथमभाषारूपेण कन्नडभाषा एव पठिता स्यात् इति । आघातः पुनः संस्कृतोपरि एव । सर्वकारीयवृत्त्यर्थं गन्तारः न्यूनाः एव स्युः, परं जनानां मनसि भीतिः तु निर्मिता एव । एतादृशाः एव केचन नियमाः अन्यैः कैश्चित् राज्यसर्वकारैः अपि कृताः सन्ति, क्रियमाणाः च सन्ति । अतः संस्कृतहितरक्षणाय वयम् अस्माकं पादयोः गतिवेगं वर्धयेम । सम्भाषणशिबिराणां प्राचुर्यं वर्धयेम । शीघ्रातिशीघ्रं संस्कृतभारत्याः कार्यं, सङ्घटनं च प्रत्येकस्मिन् स्थाने आरभामहै, तदर्थं धावेम । उत्तिष्ठत ! मा स्वप्त !!

गतेषु दशसु वर्षेषु पुणे-मुम्बयी-नगरयोः विद्यालयेषु संस्कृतस्य स्थाने विदेशीयभाषाणां पठितॄणां सङ्ख्या क्षिप्रगत्या वर्धमाना अस्ति । विदेशीयविश्वविद्यालयाः भारते महता प्रमाणेन स्वीयान् 'आपणान्' उद्घाटयन्तः सन्ति । धनिकानां प्रतिष्ठितानां च विद्यालयाः इदानीं 'International School' जायमानाः सन्ति । अन्ताराष्ट्रियता अपेक्षिता एव, गुणवत्ता अपि अपेक्षिता, मनोविशालता अपि अपेक्षिता, परं राष्ट्रियता न त्यक्तव्या । तस्याः राष्ट्रियतायाः रक्षणस्य उत्तरदायित्वम् अस्माकं संस्कृतज्ञानाम् एव । यदि वयं तत् न कुर्याम तर्हि वयम् एव (संस्कृतम् अपि) विनष्टाः स्याम । तस्मात् तस्याः राष्ट्रियतायाः रक्षणाय राष्ट्रियविचारधारायाः समर्थनं करोतु, प्रचारं करोतु, तत्सम्बन्धिकार्येषु भागं वहतु ।

स्वतन्त्रभारते संस्कृतविकासं संस्कृतहितं च वयं कियत् साधितवन्तः इति, साधितवन्तः चेत् किमर्थं, न साधितवन्तः चेत् किमर्थम् इति च आत्मावलोकनं कुर्याम चेत् वरं भवेत् । तत्र चर्चायाः केन्द्रबिन्दुः सर्वकारः न भवेत्, प्रत्युत 'वयं संस्कृतज्ञाः' स्याम । गतशताब्दीकालावधौ स्वातन्त्र्यात् पूर्वं कति कीदृशाः च शास्त्रज्ञाः

निर्मिताः आसन्, स्वातन्त्र्यानन्तरं कति कीदृशाः निर्मिताः ? स्वतन्त्र-भारतेऽपि प्रथमपञ्चविंशतिवर्षेषु अनन्तरपञ्चविंशतिवर्षेषु च कति कीदृशाः च निर्मिताः ? व्युत्पन्नानां निर्माणे पारम्परिकपाठशालानां प्रदानं किं, BA, MA, Phd कक्ष्याणां प्रदानं किम् ? अस्माभिः व्युत्पन्नाः निर्मिताः उत इतरभाषाभिः अनुवादकाः निर्मिताः ? संस्कृतज्ञानाम् अर्थात् संस्कृतशिक्षकाणां छात्राणां च ज्ञानस्तरह्रासे (सङ्ख्याह्रासे अपि) भाषाशिक्षणविधिः, पाठ्यपुस्तकानि च कियता प्रमाणेन कारणीभूतानि सन्ति ? किं संस्कृतज्ञानां, संस्कृतक्षेत्र-प्रमुखाणां च परिस्थितेः अवगमनं, चिन्तनरीतिः, कार्ययोजना, सुदूरपरिणामदर्शिता च कारणानि भवन्ति ? समस्यायाः मूलकारणं परिहारः च बहिः न अन्वेष्टव्यः, अन्तः अस्मासु, आत्मनि च अन्वेष्टव्यः । तदर्थम् उत्तिष्ठत । मा स्वप्त !!

स्वतन्त्रभारते अस्माकं संस्कृतज्ञानां सामूहिक्यः अपेक्षाः, अभियाचनाः (Demands) काः आसन् ? मुख्यतया चतस्रः आसन् । ताश्च -

१. संस्कृतविद्यालयाः भवेयुः ।

२. त्रिभाषासूत्रे संस्कृतस्य समावेशः भवेत् ।

३. प्रथमकक्ष्यातः संस्कृतपाठनम् अनिवार्यं भवेत् ।

४. संस्कृतं भारतस्य राष्ट्रभाषा भवेत् इति ।

(तत्र प्रथमस्य किञ्चिन्मात्रेण पूर्तिः जाता । द्वितीयं, तृतीयं, चतुर्थं च यावत् वयम् अन्यद् किञ्चित् कार्यं न कुर्मः तावद् नैव सेत्स्यन्ति । तद् 'अन्यद् किञ्चित् कार्यं' किम् ? प्रकृतं न लिखामि । भवान् अपि किञ्चित् चिन्तयतु एतद्विषये ।) किं यथा राष्ट्रियपक्षी मयूरः, राष्ट्रियपशुः व्याघ्रः, राष्ट्रियचिह्नम् अशोकचक्रं, राष्ट्रियस्मारकाणि अपि बहूनि सन्ति, तथा राष्ट्रभाषा इति अस्ति ? संविधाने तु 'राष्ट्रभाषा' इति पदम् एव नास्ति । 'राजभाषा' इति पदम् अस्ति ।

'अष्टमसूचीगताः भाषाः' इति पदम् अस्ति । अस्माकं महत्याः अभियाचनायाः सारशून्यतां (तथ्यशून्यतां) पश्यतु । अन्यत् अभियाचनात्रयम् अपि केवलं शिक्षासम्बद्धम् । किं वयं केवले शिक्षाक्षेत्रे संस्कृतम् आनेतुम् इच्छामः, उत व्यक्तिजीवनस्य, समाजजीवनस्य, राष्ट्रजीवनस्य च सर्वेषु क्षेत्रेषु संस्कृतम् आनेतुम् इच्छामः ? तैलचित्रस्य लेखने आधारभूतं वस्त्रम् आङ्ग्लभाषया 'canvas' इति कथ्यते । वयं संस्कृतचित्रलेखनाय लघु canvas स्वीकृतवन्तः स्मः , विशालं वस्त्रं स्वीकरणीयम् आसीत् ।

किञ्च, चित्रकारस्य त्रयः विशेषगुणाः भवन्ति - मस्तिष्के स्पष्टता, हस्ते कुशलता, हृदये उत्कटेच्छा च इति । वयं सर्वे संस्कृतानुरागिणः संस्कृतकार्यकर्तारः च तादृशाः उत्तमाः चित्रकाराः भवेम ।

संस्कृतसम्भाषणान्दोलनविषये केचन संस्कृतज्ञाः वदन्ति यत् संस्कृतसम्भाषणम् उत्तमम् एव, करणीयं च, परं शास्त्ररक्षणं शास्त्रशिक्षणं च करणीयम् इति । तद् सत्यमेव । अस्माकं हृद्यं, मूलभूतम् अभीष्टं च कार्यं शास्त्रशिक्षणमेव । तद् कर्तुं साधयितुं वा सम्भाषणम् इत्येतद् किञ्चित् प्रकृष्टोपकारकं साधनम्, अतः तस्य करणकारकत्वम् इति तावदेव अत्र अवधेयम् । किञ्च अद्य सन्ति संस्कृतस्य पादयोः शृङ्खलाबन्धनानि, मार्गे नानाविधाः अवरोधाः, साधनानाम् अभावः च ! एवं चेत् अग्रे गमनं कथं भवेत् ? अतः प्रथमं तासां बाधानां निवारणं करणीयम् इत्येषा संस्कृत-सम्भाषणशिक्षणात्मिका अस्माकं काचित् रणनीतिपूर्णा कार्य-योजना । साध्यं शास्त्रज्ञानं, तत्र साधनं सम्भाषणं, सम्भाषणान्दोलनं च । परं शास्त्राध्ययनाय, शास्त्रशिक्षणाय च विशेषतया व्याकरण-शिक्षणाय अवधानम् अवश्यं कुर्मः । यद्यपि इदानीं संस्कृतं येन यानेन गच्छत् अस्ति तस्य यानस्य चक्रयोः वायुः गतः अस्ति, याने पेट्रोल् नास्ति । 'Start' न भवति, 'कार्बोरेटर्'मध्ये अवकराः सन्ति,

'Plug'मध्ये 'Spark' एव न भवति, ब्रेक् अपि नास्ति (केषाञ्चित् मुखानाम् ?!) तथापि तद् सर्वम् अपि सम्यक् कृत्वा, कारयित्वा वा अस्माभिः अग्रे गन्तव्यम् । भोः संस्कृतानुरागिणः ! अस्माकं सर्वेषामपि ऐकमत्यम्, ऐककण्ठ्यम्, ऐककृत्यम्, ऐकहृद्यं च इति एतानि चत्वारि अत्यन्तम् आवश्यकानि ऐक्यतत्त्वानि । तानि साधयितुम् उत्तिष्ठत ! मा स्वप्त !!

भाषाभ्यासदृष्ट्या तु सम्भाषणाभ्यासः प्रथमं सोपानं, व्याकरणाभ्यासः द्वितीयं सोपानं, काव्याध्ययनं तृतीयं सोपानं, विविधशास्त्राणाम् अध्ययनम् अनन्तरसोपानानि च । क्रमेण आरोहणं करवामहै ।

अस्माकं स्वप्नानां साकारीकरणाय माध्यमद्वयं चेतव्यं भवति । प्रथमं माध्यमं तु संस्कृतमहाविद्यालय-विश्वविद्यालय-स्नातकोत्तर-विभाग-अकाडमी-बोर्ड्-शोधसंस्थाः, विविधाः संस्कृतप्रचार-परिषदः च याः आधारभूतानि, स्थिराणि, गम्भीराणि च शैक्षिकाणि कार्याणि कुर्वन्ति । द्वितीयं माध्यमं तु संस्कृतभारती या च समाजे जागरणात्मकं, प्रबोधनात्मकं, चिन्तनोत्पादकम्, आन्दोलनात्मकं च कार्यं करोति ।

प्रथमस्य माध्यमस्य द्वारा -

१) शिक्षणविधि-पाठ्यपुस्तकपरिवर्तनं शिक्षकप्रशिक्षणं च
२) व्युत्पन्नानां निर्माणम्
३) साहित्यसृष्टिः
४) पाण्डुलिपिसम्पादनं गवेषणं च
५) स्वाधीनशास्त्राणां निर्माणम्

इति मुख्यभूतानि पञ्च कार्याणि भवेयुः ।

द्वितीयस्य माध्यमस्य द्वारा -

१) संस्कृतशिक्षकच्छात्रसहितानां संस्कृतानुरागिणां महत् सङ्घटनम्

२) नानाविधाः शिक्षणात्मकाः प्रचारात्मकाः च कार्यक्रमाः
३) संस्कृतस्य स्थानरक्षणाय स्थानप्राप्त्यै वा जनाभियानानि
४) देशस्य राज्यानां च प्रमुखाणां नीतिनिर्णायकानां समर्थन-सहयोगसम्पादनाय नीतिपरिवर्तनाय च करणीयानि कार्याणि
५) साधनानां सङ्ग्रहः च

इति प्रधानानि पञ्च कार्याणि भवेयुः ।

प्रथममाध्यमस्य कार्येषु द्वितीयमाध्यमस्य पूर्णः सहयोगः भवेत् । तथा पश्यामः चेत् उभयमाध्यमयोः अपि ते एव (समानाः) संस्कृतज्ञाः कार्यं कुर्वन्ति । अतः तेषां पात्रद्वयं, कर्तव्यद्वयं च अस्ति । किञ्च, द्वितीयमाध्यमस्य द्वारा कार्यं यावद् अधिकं भवति तावत् एव प्रथममाध्यमस्य लाभः भविष्यति । अतः द्वितीयमाध्यमस्य कार्यवर्धनं प्रथममाध्यमस्य हिताय एव, कर्तव्यं च । एतत् तत्त्वम्, एतत् सत्यं सर्वे संस्कृतानुरागिणः अवगच्छेयुः, तदनुसारं कर्तव्यं कुर्युः च ।

यदि वयं सर्वे संस्कृतानुरागिणः योग्यप्रकारेण चिन्तनं कुर्मः तर्हि वर्तमानदशके संस्कृतस्य स्थितिरक्षणं भवेत्, आगामिदशके च स्थितिवर्धनं भवेत् । तर्हि किं तत् योग्यं चिन्तनम् ? राष्ट्रभक्तिः, कार्ययुक्तिः, सङ्घशक्तिः च इति । प्रखरराष्ट्रभक्तिपूर्णमानसे एव संस्कृतस्य कृते स्थानं भवति, न तु मेकालेमानसे, न तु मार्क्स्मानसे, न वा मैनारिटितुष्टीकरणमानसे इति स्वतन्त्रभारतस्य इतिहासः अस्मान् पाठं पाठयति । राष्ट्रविकासे, राष्ट्रनवनिर्माणे, राष्ट्रशक्तिवर्धने च संस्कृतज्ञानां सहभागेन एव संस्कृत-राष्ट्रविकासयोजनयोः परस्परं सजीवसम्बन्धः भवति । तस्य सजीवसम्बन्धस्य स्थापनेन एव राष्ट्रियस्तरे संस्कृतस्य, संस्कृतज्ञानां च स्थानं, परिगणना वा भवति । अतः समाजे राष्ट्रभावजागरणाय प्रयत्नः, संस्कृतज्ञानां राष्ट्रियकार्येषु सहभागः, संस्कृतज्ञेषु अपि ज्वलन्त्याः राष्ट्रभक्तेः उद्दीपनम् इत्येषः एव राष्ट्रभक्तिः इत्यस्य विषयसंक्षेपः । कार्ययुक्तिः नाम अस्माकं

कार्याणि साधयितुं वयं कथं युक्तीः कुर्मः इत्यंशः । एतस्मिन् विषये अस्माभिः प्रकृतलेखने, पूर्वमपि समये समये बहु उक्तमेव अस्ति । सङ्घशक्तिः नाम संस्कृतानुरागिणां सङ्घटितशक्तिः, राष्ट्रियविचार-वादिनां च सङ्घटितशक्तिः इति । द्वयोः शक्त्योः वर्धनेन एव संस्कृतस्य वर्धनं भविष्यति । का अन्या शक्तिः अद्यावधि संस्कृतस्य उपकारम् अकरोत् ? (राष्ट्रियविचारवादिभिः सङ्घटनैः यानि कार्याणि क्रियन्ते तैः कार्यैः एव समाजे संस्कृतानुकूलमानसिकता निर्मिता भवति । तदेव महत्तमं कार्यम् । तेन कार्येण एव संस्कृतकार्यस्य अर्धं कार्यं साधितं भवति ।)

उपरितनेन योग्यचिन्तनेन सह सर्वेषु संस्कृतज्ञेषु, संस्कृतच्छात्रेषु, संस्कृतानुरागिषु च अस्मासु एते पञ्च अंशाः वर्धेरन् -

१) संस्कृतस्य सुष्ठु ज्ञानम् ।

२) संस्कृतेन, संस्कृताय, संस्कृतस्य च जीवनम्

३) संस्कृतध्येयपूर्त्यै समय-शक्ति-स्थापनस्य सज्जता

४) अपेक्षितयोः क्षमतासमर्पणगुणयोः (अस्मासु) निर्माणम्

५) सङ्घटनात्मकम् अनुशासनं चेति ।

एतानि पञ्च गुणात्मकानि कार्याणि साधयितुम् उत्तिष्ठत ! मा स्वप्त !!

किञ्च, अहं भवनस्य आधारशिला भूत्वा भवनस्य सर्वं भारं वहामि, घर्मे शैत्ये वृष्ट्यां च समानतया अचलः सन् तिष्ठामि, अदृश्यः एव अकीर्तितः एव तिष्ठामि इति भावः अस्मासु वर्धनीयः । एतादृशचिन्तयितारः यावद् अधिकाः भवन्ति तावद् संस्कृत-कार्यभवनं, संस्कृतभारतीभवनं च दृढं, दृढतमं च भविष्यति । 'किमर्थं क्लेशः ?' 'मम पदस्य, पदोन्नतेः, समितिसदस्यत्वस्य, धनलाभस्य, प्रतिष्ठास्थानलाभस्य वा किं भवेत् ?' 'अहं सुरक्षितः तिष्ठेयम्' 'अहं Branded भवेयं वा ?' इत्यादिरूपेण चिन्तनम् अपि

अकृत्वा, निर्भयेन चेतसा, धर्माधर्मयोः मध्ये चयनं करणीयं भवति चेत् धर्मपक्षग्रहणे सङ्कोचम् अकृत्वा अचञ्चलैः, स्थिरैः, दृढैः च भवितव्यम् । केचन संस्कृतज्ञाः स्वस्य कार्यस्य निमित्तं सङ्घर्षं युद्धं वा कुर्वन्ति । इदानीं संस्कृताय, संस्कृतविकासाय युद्धकरणस्य सङ्घर्ष-करणस्य च मानसिकता अपि निर्मातव्या । अहं पुरुषार्थेन किञ्चित् संस्कृतहितं साधयेयम् इत्यपि मानसिकता निर्मातव्या । भोः संस्कृत-सुयोधनाः ! उत्तिष्ठत ! मा स्वप्त !!

अद्य संस्कृतस्य महान् सङ्कटकालः आगतः अस्ति । संस्कृतस्य कीदृशं सङ्कटम् आगतम् अस्ति इति संस्कृतानुरागिणः संस्कृत-पक्षपातिनः राष्ट्रियनेतारः चापि न अवगच्छन्ति । का पुनः सामान्यानां जनानां कथा ? तरणपटवः तरीतुम् इच्छन्ति न सामान्ये जले, अपि तु प्रवाहे गभीरसागरे एव वा ! संस्कृतस्य एषः अत्यन्तं कठिनः समयः । धीमन्तः पराक्रमिणः एव एतादृशे समये जीवितुम् इच्छेयुः । साहसपूर्णम् उद्यमं कर्तुम् इच्छेयुः । वीरः सैनिकः तु स्वपराक्रम-दर्शनाय युद्धस्य एव प्रतीक्षां कुर्वन् भवति । उत्तिष्ठत ! मा स्वप्त !!

भारतस्य स्वातन्त्र्यात् पूर्वतनेषु पञ्चाशद्वर्षेषु कठिने सङ्घर्षकाले बहवः यथा महापुरुषाः अजायन्त, तथा न अजायन्त स्वातन्त्र्योत्तरीयेषु पञ्चशद्वर्षेषु सुखदस्वाधिकारकाले । कठिनकाले महत्यः आवश्यकताः एव महतः कर्तृत्वसम्पन्नान् नेतृत्वसम्पन्नान् च राष्ट्रनायकान् उत्पादयन्ति । सङ्घर्षशीलं दुर्गमपथवत् संस्कृतान्दोलनम् एव नवराष्ट्रनेतृत्वाय जन्म दद्यात् !

महाभारते यक्षस्य प्रश्नानाम् उत्तरं युधिष्ठिरः दत्तवान् । अद्य संस्कृतसम्बन्धे, राष्ट्रसम्बन्धे, धर्मसम्बन्धे च समाजयक्षस्य बहवः प्रश्नाः सन्ति । उत्तरदातारः के ? वयम् एव भवेम । उत्तिष्ठत ! मा स्वप्त !!

❑❑

# २. किमर्थं संस्कृतभारती ?

भारतस्य स्वातन्त्र्यानन्तरं संविधानरचनावसरे भारतीयसङ्घस्य राजभाषा का भवेत् इति विषये संविधानसभायां, बहिः देशे च चर्चा आसीत् । इङ्ग्लिष्हिन्दीभाषयोः इव संस्कृतस्यापि नाम श्रूयते स्म ।

संविधानसभायां श्रीमता नजीरुद्दीन-अहमदेन प्रस्तुतः डा० भीमराव-आम्बेडकरेण समर्थितः च संस्कृतपरकः संशोधनप्रस्तावः अपि आसीत् । परं सः संशोधनप्रस्तावः पारितः न अभवत् । किमर्थम् ..? संस्कृतपरतया लोकाभिमतं निर्मातुं, जनप्रतिनिधिसमर्थनं प्राप्तुं, राष्ट्र-मानसं रूपयितुं च यानि कार्याणि करणीयानि आसन् तानि कर्तुं संस्कृताय बद्धकटि किञ्चित् जनसङ्घटनं न आसीत् । संस्कृतज्ञाः अपि सङ्घटिताः न आसन् ।

कोठारी-आयोगस्य संस्तुतेः अनुसारं १९६८ तमे वर्षे केन्द्रसर्वकारेण शिक्षानीतिः घोषिता, यस्यां संस्कृतेन स्थानं न प्राप्तम् ।

संविधानस्य अष्टमसूच्यां स्थिताभिः इतराभिः सर्वाभिः अपि भाषाभिः स्थानं प्राप्तं त्रिभाषासूत्रे, केवलेन संस्कृतेन न प्राप्तम् । परन्तु संस्कृताय योद्धुं किञ्चित् सङ्घटनं न आसीत् ।

१९८६ तमे वर्षे नूतनशिक्षानीतिः घोषिता, यया पुनः संस्कृतस्य न्यायसम्मतं स्थानं निराकृतम् । तदापि अस्मदीया सङ्घटितशक्तिः न आसीदिति कारणतः स्वीयाय आधिकारिकस्थानाय राष्ट्रस्तरे जनाभिप्रायनिर्माणं कर्तुं वयं न शक्तवन्तः । पुनरपि अवसरः नष्टः ।

एतेन प्रकारेण संस्कृतार्थं राष्ट्रव्यापि सङ्घटनं किञ्चिद् नासीदिति कारणतः एव कियन्तः अवसराः नष्टाः अभवन् ! पश्यताम् अस्माकं सम्मुखे एव अवसररूपीणि यानानि बहूनि गतानि, वयम् आरोढुं न शक्तवन्तः !

परम् एतदपि वयं पश्यामः यद् यत्र काचित् सङ्घशक्तिः आसीत् तत्र

किञ्चित् कार्यं साधितम् इति । १९८२ तमे वर्षे कर्णाटके 'गोकाक् आन्दोलनम्' इति किञ्चिदान्दोलनं प्राचलत् । गोकाक्समित्या कर्णाटकस्य माध्यमिकविद्यालयेषु प्रथमभाषासूचीतः संस्कृतभाषा बहिः कृता । तदा तत्र अखिलकर्णाटकसंस्कृतपरिषत् सक्रिया आसीत् । तस्याः परिषदः आश्रये सर्वे सम्भूय कार्यं कृतवन्तः । अन्ते संस्कृतेन पुनरपि स्वस्थानं प्राप्तम् । सङ्घशक्तिः फलदायिनी इति अनुभवः जातः ।

१९८८ तमे वर्षे सि.बि.एस्.ई.संस्थया नवम्यां दशम्यां च कक्ष्यायां नूतनशिक्षानीतेः क्रियान्वयनानुसारं संस्कृतरहितं त्रिभाषासूत्रम् आनीतम् । तदा देहलीस्थाः सर्वे संस्कृतज्ञाः सम्भूय आन्दोलनं कृतवन्तः, सर्वोच्च-न्यायालयं गतवन्तः, जयं प्राप्तवन्तः च । संस्कृतज्ञानां संस्कृतानुरागिणां च ऐक्येन तद् साधितम् अभवत् ।

परं १९९४ तमे वर्षे दत्तः सः सर्वोच्चन्यायालयनिर्णयः अद्यपर्यन्तं क्रियान्वितः न अभवत् । किमर्थम् इति पृष्टे सति सि.बि.एस्.ई. किञ्चित् रहस्यं जानाति । इदानीं तु नवमीदशम्योः कक्ष्ययोः भाषाद्वयं पाठ्यते । तत्स्थाने भाषात्रयं पाठयिष्यते चेत् छात्राणाम् अभिभावकाः विरोधं कुर्युः, देशे कोलाहलः भवेत् इति सि.बि.एस्.ई.जनाः विभीषिकां दर्शयन्ति, किञ्च एतदपि वदन्ति यत् न्यायालयनिर्णयस्य क्रियान्वयनं न जातम् इति देशे आन्दोलनम् उपस्थापयितुं संस्कृतज्ञानां शक्तिरेव नास्ति इति । एतेन केन्द्रसर्वकारः तूष्णीं तिष्ठति ।

प्रजातन्त्रे सङ्घटनशक्तिः लोकमतं च कथं कार्यं करोति इत्यस्य उदाहरणं वर्षत्रयात् पूर्वं गुजराते दृष्टम् । दशमकक्ष्यायाः वार्षिक-परीक्षानन्तरं राज्यस्तरे आदिमदशस्थानानां घोषणावसरे छात्राणां संस्कृत-भाषापत्रस्य अङ्काः न परिगण्यन्ते इति सर्वकारेण घोषितम् । संस्कृतभारत्याः कार्यकर्तारः मुख्यमन्त्रिणं, शिक्षामन्त्रिणं, शिक्षाधि-कारिणः, सम्बद्धान् सर्वान् च दृष्ट्वा निवेदनं कृतवन्तः । परं प्रयोजनं

किमपि न जातम् । तदा संस्कृतभारत्या निर्णयपरिवर्तनस्य आग्रहं कृत्वा सर्वकाराय पत्रलेखनाभियानं राज्ये सर्वत्र आरब्धम् । यदा सर्वाभ्यः दिग्भ्यः आगतानां पत्राणां संख्या चत्वारिंशत्सहस्रतः अधिका जाता तदा सर्वकारेण औष्ण्यम् अनुभूतं, निर्णयः प्रतिस्वीकृतः इति घोषितं च । प्रजातन्त्रे लोकमतं, जनाभिप्रायः, तन्निर्मात्री सङ्घटनशक्तिः इत्यादयः एव कार्यं कुर्वन्ति ।

राष्ट्रव्यापि, सर्वस्थानव्यापि सङ्घटनम् अस्ति चेदेव संस्कृतसम्बन्धे संस्कृतस्य उपकारकम्, अपकारकं वा, कुत्र किं प्रचलति इति सर्वैः ज्ञातुं शक्यते । वर्षद्वयात् पूर्वं केरले मुस्लिम्लीग्दलस्य सदस्यः यः केरलसर्वकारस्य शिक्षामन्त्री आसीत् सः एकादश्यां द्वादश्यां च कक्ष्यायां संस्कृतच्छात्राणां विद्यमानां छात्रवृत्तिं निराकृतवान् (स्थायिरूपेण) । सः एव गते वर्षे कलाच्छात्राणाम् एव संस्कृतपठनाय अवसरः (एकादश्यां द्वादश्यां च कक्ष्यायां), न तु विज्ञानवाणिज्यच्छात्राणाम् इति नियमं कृतवान् । परं देशेन एतद् ज्ञातं नाभवत् । गतमासे देहल्यां 'देहली-तमिल्-एजुकेषन्सोसायिटी' इत्यस्याः प्रतिष्ठितेषु विद्यालयेषु पाठ्यक्रमतः संस्कृतं निष्कासितम् अभवत् । (कार्यकर्तृभिः अभियानं कृतं, पुनः प्रतिष्ठापितं च इति तु विषयः अन्यः ।) यद् ह्यः केरले अभवत्, यच्च अद्य देहल्याम् अभवत्, तत् एव श्वः भवतः राज्ये अपि भवेत् । जागृत !! त्वर्यतां, यावच्छीघ्रं सङ्घटनं निर्मीयताम् !!!

षड्भ्यः मासेभ्यः पूर्वं केन्द्रीयसंस्कृतपरिषदः (Central Samskrit Board) गोष्ठी आसीत् । तत्र सि.बि.एस्.ई.अधिकारिणां सम्मुखे 'सर्वोच्चन्यायालयस्य निर्णयक्रियान्वयनं किमर्थं न क्रियते ?' इति पृष्टम् । सि.बि.एस्.ई.अध्यक्षेण - 'उत्तरप्रदेशात् अन्यत्र कुत्रापि माध्यमिकस्तरे त्रिभाषासूत्रं न आदृतम्' इति कथितम् । तद् सत्यं न इति प्रमाणयितुं कस्यापि सकाशे, संस्कृतसम्बन्धिसंस्थायाः समीपे वा मुद्रितं प्रकाशितं च प्रमाणं न आसीत् । अन्ते अस्माभिः अल्प-

संख्याकायोगस्य वार्षिकं प्रतिवेदनम् उद्धरणीयम् अभवत् । एषः एव संस्कृतज्ञानाम् अल्प-संख्याकानां च भेदः ।

नवमपञ्चवार्षिकयोजनायाम् (इदानीं तु दशमपञ्चवार्षिकयोजनायाः द्वितीयं वर्षम् आरब्धम्) संस्कृतपाठशालानाम् आधुनिकीकरणाय, 'मद्रसा' इत्याख्यानाम् आधुनिकीकरणाय च समाना काचित् योजना आसीत् । पञ्चशताधिकेषु मद्रसाख्येषु तु प्रतिमद्रसं लक्षशः रूप्यकाणां व्ययेन आ षड्भ्यः वर्षेभ्यः सङ्गणकप्रशिक्षणं प्रचलति । संस्कृत-पाठशालानां योजना तु अद्यापि कागदेषु एव अस्ति ! यदा संस्कृतज्ञेषु सामूहिक-सक्रियता भविष्यति तदा एव कागदस्थाः योजनाः कार्यगताः भवेयुः । सामूहिकसक्रियतायाः आनयनाय एकमात्रं शरणं सङ्घटनं नाम ।

संस्कृतस्य उपेक्षाविषये अहं केनचित् ऐ.ए.एस्.अधिकारिणा सह चर्चां करोमि स्म । तदा सः उक्तवान् - ''राजनीतिज्ञाः इदं स्पष्टतया जानन्ति यद् संस्कृतज्ञेभ्यः किञ्चिद् दक्षिणा दीयते चेत् ते सन्तुष्टाः भवन्ति इति । न तेषां सङ्घटनं, न तेषां साहसं, न वा तेषां वीथीम् अवतरितुं धैर्यम्'' इति ।

अस्माकं संस्कृतज्ञानां समीपे न शास्त्रम् अस्ति, न वा शस्त्रम् इति ते जानन्ति । अतः एव ते अस्मन्निमित्तं न किमपि कुर्वन्ति । न करिष्यन्ति च यावद् वयम् ऐककण्ठ्येन उच्चैः शब्दकरणस्य आरम्भं न कुर्मः । किमस्माकं स्थितिः निर्गतवायु चक्रम् इव, समाप्तेन्धनं वाहनम् इव जातम् अस्ति ? दोषान् परिष्कृत्य आत्मानं स्वयंचालितान् कृत्वा संस्कृतरथम् अग्रे नेतुम् एकमात्रम् उपायः सङ्घटनं नाम ।

संस्कृतानुकूलः सर्वकारः एव अस्माकं सर्वेषां कष्टानाम् उत्तरम् इति चिन्तनीयं नास्ति । सर्वकारः आगच्छति, गच्छति च । कदाचित् आनुकूल्यं, कदाचित् प्रातिकूल्यम् । बिहारे श्रीजगन्नाथमिश्रः यदा मुख्यमन्त्री आसीत् तदा सः संस्कृतस्य द्विसहस्राधिकपाठशालानाम्

आरम्भं कारितवान् । अनन्तरं यदा श्रीलालूप्रसादयादवः मुख्यमन्त्री अभवत् तदा सः तासां सर्वासां पाठशालानाम् अनुदानं स्थगितवान् । बङ्गाले गतेषु २७ वर्षेषु न संस्कृतशिक्षकाणां नियुक्तिं कृतवन्तः, न वा पाठ्यपुस्तकानां नवीकरणं कृतवन्तः । उत्कले शासकीयशिक्षण-महाविद्यालये संस्कृतविषयः वर्षद्वयात् पूर्वं परित्यक्तः । द्वित्राणि राज्यानि विहाय कस्मिन्नपि राज्ये एकादश्याः द्वादश्याः च कक्ष्यायाः विज्ञान-वाणिज्यच्छात्राः संस्कृतं पठितुं न शक्नुवन्ति । समग्रे मध्यप्रदेशे षष्ठीसप्तम्यष्टमीकक्ष्याच्छात्रेषु यद्यपि ९८% छात्राः संस्कृतं तृतीय-भाषारूपेण (१०० अङ्कानां पत्रं) पठन्ति तथापि पाठं संस्कृतशिक्षकः न पाठयति, अन्यभाषाशिक्षकाः पाठयन्ति, यतः सर्वकारेण विद्यालयेभ्यः संस्कृतशिक्षकपदमेव न दत्तम् । राजस्थाने इदानीं नूतन-शिक्षामन्त्री आगतवान्, ४००० रिक्तानि संस्कृतशिक्षकपदानि पूरयिष्यामि इति घोषितवान् । केरलविषये श्रूयते यत् तत्रत्यः मुस्लिम-लीग्शिक्षामन्त्री इदानीं शिक्षकाणां रिक्तपदपूरणप्रसङ्गे 'संस्कृत-शिक्षकपदपूरणं मास्तु' इति कागदेषु किमपि अलिखित्वा मुखेन तम् अंशम् उक्त्वा यथा संस्कृतपदानां पूरणं न भवेत् तथा व्यवस्थां कौशलेन कृतवान् इति । तथा पश्यामः चेत् सर्वेषु अपि सर्वकारेषु काश्चन व्यक्तयः एव संस्कृतविषये रुचिम् अरुचिं वा दर्शयन्ति । यथा गतेषु दशसु वर्षेषु केन्द्रे ये त्रयः शिक्षामन्त्रिणः अभवन् तेषु डा॰ मुरलीमनोहरजोशीमहोदयः संस्कृतविषये अत्यधिकां रुचिं प्रदर्शितवान् । तस्य मुरलीमनोहरजोशीमहोदयस्य काले अपि चत्वारः शिक्षासचिवाः कार्यं कृतवन्तः, तेषु श्रीमहाजनकृष्णकाव्महोदयः स्वीयेन कार्येण संस्कृतार्थम् अनन्यसाधारणीं रुचिं दर्शितवान् । प्रकृतस्थितौ तु अखिलभारतस्तरे, राज्यस्तरे, जिलास्तरे, स्थानीयस्तरे च तत्तत्स्तरीयाः अधिकारिणः, राजनीतिज्ञाः, प्राचार्याः अथवा सम्बद्धाः ये सन्ति तेषां सर्वेषाम् उपसर्पणं, तोषणं, प्रीणनं, प्रार्थनम्, अनुनयः, पादग्रहणं,

निवेदनम्, आवश्यकतायां सत्यां शक्तिप्रदर्शनं च, यद्यद् करणीयं तद् सर्वमपि करणीयं भवेत् - सर्वमपि संस्कृताय । एतच्च कार्यं प्रतिनगरं प्रतिग्रामं प्रतिस्थानं च करणीयं भवेत् । द्वापरयुगे कुरुक्षेत्रम् एकत्र एव आसीत् । इदानीन्तनं कुरुक्षेत्रं तु समग्रभारतदेशः ! भारतस्य ३५०० नगराणि, ५,८०,००० ग्रामाः च !! सर्वकारः स्वयं किमपि न करोति । वयं संस्कृतज्ञाः संस्कृतानुरागिणः च योजनाबद्धरूपेण व्यक्तिं व्यक्तिं गृहीत्वा तस्य मनः परिवर्तयेम चेत्, तस्य द्वारा कार्यं कारयेम चेत् किञ्चित् साधितं भवेत् । एतत् कार्यं कर्तुं लक्षशः कार्यकर्तारः निर्मातव्याः । शक्त-सङ्घटित-देशव्यापि-पुनरुत्थानशील-संस्कृतानुरागि-जनचेतना केवलं संस्कृतहितं सुष्ठु रक्षितुं वर्धयितुं च शक्नुयात् ।

सार्वत्रिकरूपेण संस्कृतशिक्षकाणां कश्चन सामान्यः आक्षेपः अस्ति । स च - 'मम विद्यालयस्य प्राचार्यः संस्कृतस्य प्रोत्साहनं न करोति' इति । ते प्राचार्याः एतस्य एव समाजस्य जनाः । अतः अस्माभिः समाजमानसस्य, राष्ट्रमानसस्य च परिवर्तनं चिन्तनीयम् । तदा एव संस्कृतसमस्यानां परिहारः भवेत् । प्रवाहस्य गत्याः दिशापरिवर्तन-कार्यमिव अस्ति इदम् । परम् अवश्यमेव करणीयं कार्यं, यद्विना नान्या गतिः । महाशक्तिसाध्यं कार्यमिदम् ।

किञ्च, प्रजातन्त्रे राजशक्तिः लोकशक्तिमात्रस्य मान्यतां करोति । तस्मात् अस्माभिः राजशक्तेः प्रबोधनाय, लोकमतस्य संस्कृतोन्मुखता-सम्पादनाय, लक्षशः प्राचार्याणां प्राचार्यसदृशानां च मनःपरिवर्तन-कार्याय, धर्मशक्तेः प्रतिष्ठापनाय च संस्कृतज्ञानां संस्कृतानुरागिणां च आकन्याकुमारि आहिमालयं व्याप्तं जनसङ्घटनं निर्मातव्यम् ।

युद्धविषये यद् वदन्ति - 'अस्त्राणि युद्धं न कुर्वन्ति, अस्त्रग्रहीता मानवः युद्धं करोति । मानवः अपि युद्धं न करोति, तस्य मनोबलं तत् करोति' इति, तदेव संस्कृतक्षेत्रे अपि अन्वेति । संस्कृतं न, संस्कृतज्ञः, संस्कृतज्ञः न, तस्य मनोबलं निर्णायकम् अस्ति । संस्कृतस्य भविष्यं

संस्कृतज्ञानां चिन्तनरीतिः, रणनीतिः, कार्यपद्धतिः, सङ्घटनशक्तिः, राष्ट्रभक्तिः इत्येतान् एव अंशान् अवलम्ब्य तिष्ठति । संस्कृतभाषायाः उपयोगिता, संस्कृतशिक्षणस्य गुणवत्ता, समाजे संस्कृतज्ञानां स्वीकारार्हता, पाठ्यक्रम-पाठ्यसामग्री-शिक्षक-कक्ष्यादीनाम् उपलब्धिः इत्येतासां चतसृणां वर्धनं संस्कृतज्ञैकसाध्यं, संस्कृतज्ञानां समन्वित-कार्यसाध्यं च । संस्कृतक्षेत्रे संख्यात्मकं, व्यवस्थात्मकं (Systemic), गुणात्मकं च परिवर्तनम् आनेतुं सकलस्थानव्यापि जनसङ्घटनं निर्मातव्यम् ।

भाषणैः, लेखनैः, अपेक्षाभिः, अभियाचनाभिः च सङ्घटनं निर्मितं न भवति । सङ्घटननिर्माणाय संस्कृतज्ञेषु संस्कृतानुरागिषु च राष्ट्रियतायाः, देशभक्तेः, ध्येयवादस्य, सामूहिकतायाः, आदर्शवादस्य, क्रिया-शीलतायाः, त्यागसमर्पणयोः, निस्स्वार्थतायाः, आत्मीयतायाः, संवेदनाशीलतायाः, संस्कृतप्रेम्णः च नित्यसञ्चारः भवेत् । तदर्थं काचित् कार्यपद्धतिः भवेत्, काचित् व्यवस्था भवेत्, कार्यक्रमाः च भवेयुः । 'दोषापनयनं गुणाधानं' च संस्कारः इति कथ्यते । तथा संस्कृतज्ञानाम् अस्माकं संस्काराय परिष्काराय वा, सङ्घटने सर्वैः सह मिलित्वा कार्यकरणम् अपेक्षितम् । यावत् प्रतिसंस्कृतज्ञहृदये उपरितनाः गुणाः अङ्कुरिताः जीवने अभिव्यक्ताः च न भवन्ति, तावत् सर्वव्याप्तस्य संस्कृतस्य कल्पनां कर्तुं न शक्नुयाम ।

संस्कृतक्षेत्रस्य केषाञ्चित् प्रमुखाणां मूल्यरहितः व्यवहारः, पदप्रतिष्ठा-पुरस्काराणां कृते संस्कृतहितस्य बलिदानं, व्यक्तिजातिप्रदेशानां पुरतः योग्यतायाः गौणता, परस्परं पादाकर्षणं पङ्कक्षेपणं च, व्यक्तिगताः अभिनिवेशाः च संस्कृतम् इतोऽपि दुर्बलं कुर्वन्तः सन्ति । तस्याः समस्यायाः परिहाराय उपायः नाम सर्वेषु अपि संस्कृतज्ञेषु ध्येयवादस्य निर्माणं, संस्कृतसम्बन्धे राष्ट्रसम्बन्धे च समानस्वप्नाकाङ्क्षाणां निर्माणं, सर्वेषां हृदयेषु समानस्पन्दनोत्पादनं, सर्वेषां मनांसि सदैव यथा

संस्कृतोत्थानकार्यविषयकेषु चिन्तनेषु मग्नानि स्युः तथा वातावरण-निर्माणं, संस्कृतं प्रति सकारात्मकभावनिर्माणं, राष्ट्रं प्रति भावनात्मक-प्रतिबद्धता इत्येते एव सर्वेषाम् अस्माकम् एकतायाः आधारभूताः अंशाः ।

सङ्घटने सति, स्थाने स्थाने संस्कृतज्ञानां संस्कृतानुरागिणां च कार्यकर्तृणां नियतमेलनेन कार्यचिन्तनेन च प्रगतिः, न्यूनताः, समस्याः, परिहाराः इत्यादयः सर्वेऽपि दृष्टिगोचराः भवन्ति । मेलनेन क्रमशः सर्वेषु परस्परस्नेहबन्धः भवति, सङ्घशक्तिः निर्मिता भवति । पुनः पुनः मेलनेन एव, मिलित्वा कार्यकरणेन, एकया एव पद्धत्या कार्यकरणेन एव सङ्घभावः, समष्टिभावः च वर्धते । अतः सङ्घटन-निर्माणे साप्ताहिकस्य, पाक्षिकस्य, मासिकस्य वा उपवेशनस्य (बैठक्-इत्याख्यस्य) बहु महत्त्वम् अस्ति ।

संस्कृतक्षेत्रे चिन्तकाः सन्ति, सिद्धान्तकाराश्च सन्ति । चिन्तनानि सन्ति, सिद्धान्ताश्च सन्ति । उज्ज्वलः इतिहासः, महती परम्परा च अस्ति । भविष्यस्य विषये कल्पनाः अपि सन्ति । पाठशालाः महा-पाठशालाः महाविद्यालयाः विश्वविद्यालयाः च सन्ति । 'अकाडमीस्' सन्ति, 'बोर्ड्स्' सन्ति । प्रचारसङ्घाः सन्ति, प्रचारपरिषदः सन्ति । मठमन्दिराणि सन्ति, शोधसंस्थानानि सन्ति, ताडग्रन्थभाण्डागाराणि सन्ति । पण्डिताः, विद्वांसः, शिक्षकाः, प्राध्यापकाश्च सन्ति । परम् एतान् सर्वान् एकसूत्रेण योजयितुं सङ्घटनं नास्ति । संस्कृतक्षेत्रस्य एतस्याः न्यूनतायाः निवारणाय एव अस्ति संस्कृतभारती ।

स्वयंप्रेरणया स्वयंस्फूर्त्या च संस्कृतसेवायाः राष्ट्रसेवायाः च कर्तव्यनिर्वाहस्य प्रेरणादात्री संस्कृतभारती । अस्माकं सामूहिकस्वप्नानां सङ्कल्पनानां च मूर्तरूपदात्री संस्कृतभारती संस्कृतज्ञानां संस्कृतानुरागिणां च अभिव्यक्तिमाध्यमम् अपि अस्ति ।

संस्कृतोज्जीवनाय देशे विदेशेषु च सहस्रशः संस्थाभिः, लक्षशः

हस्तैः च कार्यं करणीयम् । अपि च ताः सर्वाः संस्थाः अपि अस्मदीयाः एव । तथा सत्यपि अस्माकम् ऐक्यार्थम्, एकसूत्रतार्थं, परस्पर-सामञ्जस्यस्थापनार्थं, सहयोग-सहकार-सहचिन्तननिर्माणार्थं च काचिद् एका केन्द्रभूता सर्वसमावेशिका संयोजिका संस्था अपेक्षिता खलु ? तदर्थम् अस्ति संस्कृतभारती ।

किमर्थं संस्कृतभारती एव ..?

यतः एतावता एव अखिले भारते तस्याः उपस्थितिः अस्ति । तस्याः पृष्ठतः बहूनां राष्ट्रियसङ्घटनानां समर्थनम् अस्ति । तस्याः साध्यसाधनस्पष्टता अस्ति । सुपरिष्कृता कार्यपद्धतिः अस्ति । सङ्घटननिर्माणाय अपेक्षितं 'दर्शनम्' अपि अस्ति । संरचना च निर्मीयमाणा अस्ति ।

भाषाप्रचारस्य तात्कालिकः सीमितः च उद्देशः संस्कृतभारत्याः न । राष्ट्रस्य उत्थानस्य, सर्वाङ्गीणविकासस्य च चिन्तनम् अस्माभिः करणीयम् । तस्माद् दूरदर्शिदृष्टिमन्तः सङ्घटकाः वयं राष्ट्रियरपरिचर्चासु भागं वहेम । राष्ट्रविकासयोजनासु संस्कृतस्य पात्रं प्रबलतया प्रति-पादयेम । व्यावहारिकरूपेण प्रयोगान् कृत्वा उदाहरणानि उपस्थापयेम । सः अस्माकं संस्कृतध्वनिः सर्वेषां श्रुतिपथम् आगच्छेत् । तदा एव संस्कृतकार्यं नाम एतद् राष्ट्रियकार्यम् इति सर्वेषां भानं भवेत् । एतेन प्रकारेण संस्कृतस्य समकालिकोपयोगिताप्रतिष्ठापने राष्ट्रिय-आयामदर्शने च संस्कृतभारती प्रयासरता अस्ति ।

कार्यकर्तॄणां चरित्रेण एव सङ्घटनस्य चरित्रं निर्मितं भवति । अत एव संस्कृतभारत्यां संस्कृतज्ञानाम् अस्माकं व्यवहारः, जीवनशैली, वाक्, कार्यशैली इत्यादीनां विषये महान् आग्रहः भवति । परन्तु संस्कृतभारती व्यक्तिनिष्ठा न, अपि तु ध्येयनिष्ठा, तत्त्वनिष्ठा, कार्य-निष्ठा, धर्मनिष्ठा च । कार्यकर्तॄणां तु स्वकोषतः एव धनव्ययं कृत्वा कार्यकरणप्रवतिः भवति । संस्कतभारत्यां कार्यकरणेन मया किं

प्राप्येत इति कोऽपि न चिन्तयति, अपि तु अत्र तु सर्वः अपि समयदानं, ज्ञानदानं, श्रमदानं, धनदानं, जीवनदानम् इति सर्वस्य दानम् एव चिन्तयति ।

संस्कृतभारती समन्वयशीला, उदारा, परिस्थितिनिरपेक्षा, समाजावलम्बिता, आवश्यकपरिवर्तनशीला च भवेत् इति अस्माकम् अपेक्षा । संस्कृतभारती लिखितसंविधानरूपम् आधारम् अनवलम्ब्य सङ्घटनात्मकपरम्परा-परिपाट्यादीनां, पूर्वजव्यवहारानुभवयोः च आधारेण प्रचलति ।

संस्कृतभारती संस्कृतशिक्षकाणां संस्कृतच्छात्राणां चैव सङ्घटनं नैव, संस्कृतभारती संस्कृतानुरागिणां सङ्घटनम् । (संस्कृतानुरागिषु संस्कृतज्ञाः, संस्कृतशिक्षकाः, संस्कृतच्छात्राश्च अन्तर्भवन्ति एव ।) सर्वेषां संस्कृतशिक्षणं संस्कृतभारत्याः कार्यम् । राष्ट्रभक्तिः तस्याः वैचारिकम् अधिष्ठानम् । समर्पणं तस्याः चरित्रम् । धर्मः तस्याः मार्गदर्शकतत्त्वम् । जनबलं तस्याः आधारः । सामूहिकता तस्याः शैली । संस्कृतेन वाग्व्यापारः तस्याः अभिज्ञानम् । गुणप्राथम्यं तस्याः वैशिष्ट्यम् ।

भाषोत्थानमाध्यमेन धर्मसंस्कृतिशास्त्रवेदादीनां पुनरुत्थानकार्यमिदम् आध्यात्मिकचेतनायाः समानम् । संस्कृतकार्येण उत्पत्स्यमानं चैतन्यमेव अस्य राष्ट्रस्य धारणशक्तिः ।

संस्कृतज्ञः, संस्कृतकार्यं, राष्ट्रम् - इत्येतेषां त्रयाणां परस्परसम्बद्धता (connectivity) अपेक्षिता । इदानीं तु सामान्यतः संस्कृतज्ञः समाजस्य मुख्यधारातः, राष्ट्रतः, राष्ट्रोत्थानकार्यतः, संस्कृतकार्यतः च असम्बद्धः (disconnected) अस्ति । संस्कृतज्ञसंस्कृतकार्ययोः सम्बद्धता, संस्कृतकार्यराष्ट्रयोः सम्बद्धता, राष्ट्रसंस्कृतज्ञयोः सम्बद्धता चेति एताः सम्बद्धताः त्रिकोणचित्रे इव सर्वदा परस्परं सम्बद्धाः एव तिष्ठेयुः । तेनैव त्रयाणामपि श्रेयः । तां सम्बद्धतां प्रवाहवती विद्युत्तन्त्री इव चैतन्यमयीरूपेण संरक्षति संस्कृतभारती ।

संस्कृतभारती भवदीया, मदीया, त्वदीया, तदीया च । सा संस्कृतभारती सर्वेषां भवेत्, सर्वजीवनक्षेत्रव्यापिनी, सर्वस्थानव्यापिनी च भवेत् । विशालं जनसङ्घटनं (Mass Organisation) भवेत् । भारतस्य प्रतिनगरं (महानगरेषु प्रत्युपनगरं), प्रतिग्रामं, प्रतिस्थानं च संस्कृतभारत्याः घटकभूतः कार्यकर्तृगणः भवेत्, तस्मिंश्च स्थाने आवर्षं विविधाः संस्कृतकार्यक्रमाः भवेयुः । अतः प्रत्येकं संस्कृतच्छात्रः, संस्कृतशिक्षकः, संस्कृतज्ञः, संस्कृतस्य अनुरागी च संस्कृतभारत्याः कार्यकर्ता भवेत् । आम्, यदि भवान् आत्मानं तथा चिन्तयति, तर्हि निश्चयेन भवान् अपि संस्कृतभारत्याः कार्यकर्ता एव । संस्कृताय किं करणीयं, कथं करणीयम् इति अधिकविवरणार्थं संस्कृतभारत्याः राज्यशाखायाः सम्पर्कं करोतु, तथा च 'संस्कृतभारती'नामकं पुस्तकं (यच्च संस्कृतभारत्या प्रकाशितम्) पठतु ।

संस्कृतोत्थानाय महतः सङ्घटनस्य निर्माणम् अनिवार्यम् । अतः सङ्घटननिर्माणम् इत्येतदेव अस्माकं सद्यःकालीनं लक्ष्यम् । सर्वेषामपि प्रश्नानाम् उत्तरमेकमेव – सङ्घटनम् इति । सङ्घटनाय सङ्घटनम् । पञ्चषाणि वर्षाणि यावत् नान्यः कोऽपि विषयः अस्मान् कर्तव्यपथात् अपाकर्षेत् । सङ्घटनमेव मन्त्रः, सङ्घटनमेव तन्त्रम् । तस्य सङ्घटनरूपिणः कल्पवृक्षस्य वर्धनाय वयम् अस्माकं जीवनजलधारया प्रतिदिनं सेचनं कुर्याम ।

संस्कृतम् अस्माकं प्राणाः । संस्कृतकार्यम् अस्माकं जीवनम् । संस्कृतभारती अस्माकं प्रेरणास्त्रोतः । अहं संस्कृतभारत्यै, मदीयं सर्वं संस्कृतभारत्यै !

❑ ❑

# ३. मूलभूतं कार्यम्

संस्कृतस्य विकासः चतुर्धा भवेत् - गृहभाषारूपेण, लिखित-साहित्यरूपेण, शास्त्रज्ञानरूपेण शिक्षण-विज्ञान-प्रशासन-वाणिज्यादीनां माध्यमभाषारूपेण च इति । अद्यतनं बाह्यं वातावरणं पश्यामः चेत् एतत् कार्यचतुष्टयम् अपि असम्भवम् इव भासेत । परम् अद्यतनानां संस्कृतच्छात्राणां यूनां च मनः अङ्गीकरोति चेत् ते चतुर्विधाः विकासाः अपि साधयितुं शक्याः । लक्ष्यं बहुश्रमसाध्यं सुदूरे विद्यमानं च चेदपि असाध्यं तु न। अपि च राष्ट्रोन्नत्यै संस्कृतोन्नतिः यावत् अनिवार्या अस्ति तावता एव प्रमाणेन संस्कृतोन्नत्यै उपरितनाः चतुर्विधाः विकासाः अपि अनिवार्याः सन्ति ।

**आत्यन्तिकं प्रयोजनम्**

तत्र शास्त्रज्ञानप्रचारः, शास्त्राणाम् अध्ययनम् अध्यापनं च, शास्त्रचिन्तनं, शास्त्रगोष्ठी, वाक्यार्थसभा, शास्त्रचर्चा इति शास्त्रसम्बन्धीनि यानि विविधानि कार्याणि प्रचलन्ति एतानि अत्यन्तं महत्त्वभूतानि । संस्कृतभाषायाः आत्यन्तिकं प्रयोजनं नाम शास्त्र-ज्ञानम् । अतः शास्त्राणां शिक्षणस्य यद् कार्यं भवति तदेव संस्कृतप्रचारक्षेत्रे महत्तमं मूलभूतं कार्यम्, अद्य अस्माभिः सर्वैः चिन्तनीयं च कार्यम् ।

शास्त्रपरम्परा क्षीयमाणा अस्ति । स्वाधीनशास्त्राः विद्वांसः देशे केचन एव सन्ति । तेऽपि वयोवृद्धाः । १०-२० वर्षाणाम् अनन्तरं किं भवेत् इति गम्भीरा चिन्ता अस्मान् सर्वान् बाधते ।

सा शास्त्रपरम्परा अद्यावधि कथं जीविता ? तत्र प्रथमं कारणं तु - प्रमेयग्रन्थानां प्रक्रियाग्रन्थानां प्रकरणग्रन्थानां च अध्ययनम् अध्यापनं च । द्वितीयं कारणं – शास्त्रगोष्ठी, शास्त्रचर्चा, वाक्यार्थ-सभा, शास्त्रार्थसभाः च । पठितारः परीक्षायाः उद्देशेन तत्सम्बन्धिनं

पाठ्यक्रमं न पठन्ति, अपि तु ज्ञानसम्पादनोद्देशेन एकैकं ग्रन्थम् अधीयानाः तं तं ग्रन्थं सव्याख्यानं सम्पूर्णं च स्मृत्यधीनं कुर्वन्ति स्म । शास्त्राणाम् अध्ययनम् अध्यापनं च धर्मबुद्ध्या क्रियते स्म । (क्रियमाणा अस्ति च ।) अद्यापि केचन पारम्परिकपण्डिताः शुल्कम् अस्वीकृत्य एव शास्त्रग्रन्थान् पाठयन्ति । शास्त्ररक्षणमेव तेषां लक्ष्यम् । प्रतिदिनं पाठनं 'नित्यकर्म' इति ते मन्यन्ते । स्वस्य आनन्दाय, स्वान्तःसुखाय च आत्मानं शास्त्राध्यापने शास्त्रचिन्तने च व्यापारयन्ति ते ।

**प्रवहति शास्त्रपरम्परा**

काश्यां शास्त्रशिक्षणपरम्परा गङ्गा इव अजस्त्रं प्रवहन्ती एव अस्ति । श्रीगजाननशास्त्री मुसलगाँवकरमहोदयः (यस्य वयः ९० वर्षाणि) प्रतिदिनं गृहे द्वित्रघण्टाः यावत् पाठयति । उपविंशाः शिक्षार्थिनः तत्र आगच्छन्ति । सर्वाणि शास्त्राणि पाठयति सः । तस्य जामाता श्रीमान् अनिलकिञ्जवडेकरः वदति – "यदि कस्मिंश्चित् दिने छात्राः न आगताः तर्हि तस्मिन् दिने मुसलगाँवकरमहोदयः अस्वस्थः भवति । प्रतिदिनं पाठनं विना सः स्थातुमेव न शक्नोति" इति । पाठने तावती रुचिः तस्य ! तदतिरिच्य 'निर्णयसिन्धुः' इत्येतस्य महतः धर्मशास्त्रग्रन्थस्य व्याख्यानमपि लिखन् अस्ति सः ।

पण्डितः श्रीपुरुषोत्तमत्रिपाठिमहोदयः ७७वर्षीयः । काश्यां केदारघट्टे श्रीविद्यामठे प्रतिदिनं चतस्त्रः घण्टाः यावत् नव्यव्याकरणं वेदान्तं च पाठयति सः । ४०-४५ छात्राः तत्र अध्ययनं कुर्वन्ति । मया सः दूरभाषया पृष्टः – "शास्त्ररक्षणाय किं करणीयम् ?" इति । तेन उक्तम् – "देशस्य कस्माच्चित् वा स्थानादपि, योग्यान् प्रतिभावतः च द्वित्रान् छात्रान् चित्वा अत्र प्रेषयतु । अहं तान् सुष्ठु पाठयिष्यामि, व्युत्पन्नान् च करिष्यामि" इति । एतस्मिन् वयसि अपि शास्त्राणि पाठयितुं, तादृशं श्रमं कर्तुं च तस्य कियान् उत्साहः !

प्रो॰ केदारनाथत्रिपाठिमहोदयः, अशीतिवर्षीयः । सः प्रतिदिनं घण्टाद्वयं यावत् २०-२५ छात्रान् दर्शनानि पाठयति । डा॰ मुरलीधरपाण्डेयमहोदयः एकाशीतिवर्षीयः, प्रतिदिनं तिस्रः चतस्रः वा घण्टाः यावत् १२-१५ छात्रान् व्याकरणं दर्शनं च पाठयति । प्रो॰ रामयत्नशुक्लमहोदयः द्विसप्ततिवर्षीयः, प्रतिदिनं ८-१०घण्टाः यावत् ४०-५० छात्रान् व्याकरणं वेदान्तं च पाठयति । प्रो॰ पारसनाथद्विवेदिमहोदयः तु षष्टिवर्षीयः । प्रतिदिनं ५-६ घण्टाः यावत् २०-२५ छात्रान् वेदान्तं व्याकरणं च पाठयति सः । प्राध्यापकः वसिष्ठनारायणत्रिपाठिमहोदयः त्रिषष्टिवर्षीयः, प्रतिदिनं ५-६घण्टाः यावत् २२-३०छात्रान् नव्यन्यायं, विशिष्टाद्वैतं, सांख्यदर्शनं च पाठयति । प्रा॰ वायुनन्दनपाण्डेयमहोदयः पञ्चसप्ततिवर्षीयः । सोऽपि प्रतिदिनं ५-६ घण्टाः यावत् ३५-४० छात्रान् साहित्यं व्याकरणं च पाठयति । एवमेव काश्यां निश्शुल्करूपेण पाठयितृणाम् एषा सूची सुदीर्घा अस्ति । अपरे वयसि अपि कीदृशं तपः ! विद्यादानाय, ज्ञानदानाय, परम्परायाः अनुवर्तनाय च शरीरसामर्थ्यं, कष्टानि, वार्धक्यं चापि अविगणय्य कीदृशोऽयं परिश्रमः !

**किं नाम पाण्डित्यम् ?**

देशे तत्र तत्र एतादृशाः ज्ञानधनाः पारम्परिकपण्डिताः बहवः सन्ति । वयोवृद्धाः सन्तोऽपि अध्ययनाध्यापननिरताः सन्ति ते । परम् एतादृशाः विरलाः जायमानाः सन्ति । सम्भावितस्य अपायस्य कल्पना एव नास्ति बहूनाम् । पाण्डित्यं नाम किम् इत्येव ये न जानन्ति तान् कथं वा अवगमयितुं शक्नुयाम ? यथा - शृङ्गगिरिजगद्गुरवः श्रीश्रीभारती-तीर्थस्वामिनः सन्ति । तेषां मुखपरिचयः सर्वेषाम् अस्ति । परं तेषां ज्ञानस्य परिचयः ? षट्सु अपि शास्त्रेषु समानः अधिकारः तेषाम् ! स्वायत्तीकृतसकलशास्त्राः ते हिमालयस्य उपरि सन्ति, अन्ये सर्वे अधः सन्ति इत्येतत् बोधयितुं न शक्नुयाम । (वयं तु पातालतुल्ये गर्ते

स्मः !)

ज्ञानश्रमः नाम किञ्चित् अन्यदेव तद् । काश्याः येषाम् अष्टानां जनानाम् नाम्नाम् उल्लेखम् अहं कृतवान् तेषां माहात्म्यं कीदृशम् इति सन्देशवाचकाः कथं बोधनीयाः इति यदा अहं बेङ्गलूरुनगरस्थं वैयाकरणं श्रीमन्तं महाबलेश्वरभट्टं पृष्टवान् तदा तेन उक्तम् - ''कश्चन स्वाधीनकौमुदीकः अस्ति इति भवान् चिन्तयतु । पृष्टे सति सिद्धान्त-कौमुद्याः कमपि भागं, कामपि पङ्क्तिं, विना पुस्तकदर्शनं, स्मृतिबलेन एव, विभिन्नैः व्याख्यानैः सह सिद्धान्तं प्रक्रियां च विवरीतुं शक्नोति सः । एतादृशरूपेण एव पञ्चाशदधिकान् ग्रन्थान् स्वाधीनान् कृतवन्तः भवन्ति एते विद्वांसः - इत्येवं सामान्यरूपेण वक्तुं शक्यते'' इति ।

तस्य एव प्रश्नस्य उत्तरं संग्रहेण श्रीलालबहादूरशास्त्रिराष्ट्रिय-संस्कृतविद्यापीठस्य डा॰ वासुदेवघुषेमहोदयः उक्तवान् - ''शास्त्रविषये पारङ्गतत्वं, शास्त्रान्तरेषु निपुणता, स्वगुरुपरम्परायाः अभिमानः, सदाचारपरायणतायां पक्षपातः, सरलायाः जीवनपद्धतेः स्वीकारः, जीवने कपटतादीनां दुर्गुणानाम् असमावेशः, जिज्ञासुभ्यः विद्यादाने कार्पण्याभावः'' इति ।

**रक्षितं शिष्टैः**

व्याकरणमहाभाष्ये पस्पशाह्निके शिष्टलक्षणं यथा उक्तं - 'कुम्भीधान्याः अलोलुपाः कारणमन्तरा शास्त्रपारगाः' इति तथा अद्यापि केचन सन्ति, ये भगवता दत्तेन एव सन्तृप्ताः सन्तः लाभोद्देशेन विना ज्ञानसम्पादनज्ञानप्रसारणोद्देशमात्रेण एव प्रतिदिनं शास्त्राध्ययनाध्यापनकार्ये मग्नाः सन्ति । संस्कृतं यदि अद्यापि जीवति तर्हि तत्र कारणम् एतादृशानां तपः एव !

शास्त्राध्येतॄणां सङ्ख्यावर्धनाय अस्माभिः इदानीं गम्भीरतया चिन्तनीयम् । छात्रेषु रुच्युत्पादनाय, तेभ्यः दृष्टिदानाय च शास्त्र-परिचयशिबिराणि आयोजनीयानि । सिद्धान्तकौमदीतर्कसङ्ग्रहादीनां

ग्रन्थानाम् अध्ययनाय उत्सुकानां स्वाध्यायवर्गाः आयोजयितुं शक्यन्ते । उत्तमच्छात्राः उत्तमगुरुभिः सह योजनीयाः ।

शास्त्राध्ययनाध्यापनविषये अनुरोधस्य किञ्चित् उत्कृष्टम् उदाहरणं नाम उडुपिक्षेत्रस्य अष्टमठाधिपतयः, तत्रापि विशिष्य पेजावर-मठाधीशाः श्रीश्रीविश्वेशतीर्थस्वामिनः ! 'प्रतिदिनं पाठनीयम्' इति व्रतं पालयन्तः ते यात्रावसरेऽपि (प्रायः प्रतिदिनम् अपि) शिष्यान् अपि स्वेन सह यानेन नयन्तः मार्गे अपि निरन्तरं शास्त्रपाठं कुर्वन्ति !

**अनुपमम् उदाहरणम्**

एतस्मिन् प्रसङ्गे उत्तरप्रदेशस्य श्रीमती सरोजिनीत्रिपाठिमहोदया अवश्यम् अस्माभिः स्मर्तव्या । तस्याः पतिः कलकत्तानगरे वाणिज्यं करोति स्म । तयोः उभौ पुत्रौ तिस्रः पुत्र्यः च जाताः । सा पञ्च अपत्यानि अपि बाल्ये किञ्चित् किञ्चित् संस्कृतं पाठितवती । अपि च निश्चितवती यत् पञ्च अपि पारम्परिकपद्धत्या संस्कृतं पठेयुः इति । उभौ अपि पुत्रौ काश्यां संस्कृतव्याकरणशास्त्रम् अधीतवन्तौ । प्रकृतं राष्ट्रियसंस्कृतसंस्थाने तौ प्रवाचकव्याख्यातारौ स्तः । तयोः ज्येष्ठः एव डा॰ ललितकुमारत्रिपाठी यश्च अनौपचारिकसंस्कृतशिक्षण-योजनायाः राष्ट्रियसंयोजकः अस्ति । तिस्रः पुत्र्यः अपि संस्कृत-आचार्य-उपाधिधारिण्यः । तिसृणां पुत्रीणामपि विवाहं सा अन्विष्य अन्विष्य संस्कृतज्ञैः सह एव कारितवती । एतावदेव न, इदानीं सा पुत्रयोः पुत्रीणां च अनुरोधं कुर्वती अस्ति यत् तयोः तासां च प्रत्येकम् अपत्यम् अपि पारम्परिकपद्धत्या संस्कृतमेव पठेत् इति । वन्दनीया, पूजनीया खलु सा माता, संस्कृतजगतः आदर्शभूता ! यदि वयं सर्वे अपि तस्याः आदर्शम् अस्माकं जीवने अनुसरेम ..!

पदानां व्युत्पत्तिम्, अर्थात् प्रकृतिप्रत्यययोः योजनेन पदनिर्माणं यद् भवति तत्र या प्रक्रिया अस्ति तां प्रक्रियां ससूत्रं यः वक्तुं शक्नोति सः 'व्युत्पन्नः' इति कथ्यते । प्रत्येकं संस्कृतच्छात्रः अपि 'अहं व्युत्पन्नः

भवेयम्' इति लक्ष्यं स्वीकुर्यात् । तदर्थम् अहर्निशं प्रयत्नशीलः भवेत् । गुरुमुखात् पाठं शृणुयात् । तदभावे तावत्पर्यन्तं वा स्वाध्यायं कुर्यात् । 'जिज्ञासा' इति या अस्ति सा कस्मिन्नपि जने अन्येन उत्पादयितुं न शक्या । तेन स्वयं करणीया भवति । जिज्ञासुः भवति चेत्, परिश्रमं च करोति चेत् सः ज्ञानी भवत्येव ।

**करणीयानि षट् कार्याणि**

अधिजिगीषुणा संस्कृतच्छात्रेण संस्कृतस्य आधारभूतं ज्ञानं सम्पादयितुं षट् कार्याणि करणीयानि -

१. शब्दरूपाणां धातुरूपाणां च कण्ठस्थीकरणम् ।

२. अमरकोषस्य कण्ठस्थीकरणम् ।

३. अष्टाध्याय्याः कण्ठस्थीकरणम् ।

४. सिद्धान्तकौमुद्याः बालमनोरमाव्याख्यासहितं सुष्ठु अध्ययनम् । (ससूत्रं रूपसिद्धिं यथा वक्तुं शक्नुयात् तथा । )

५. पञ्चसु महाकाव्येषु प्रतिमहाकाव्यं न्यूनातिन्यूनं सर्गत्रयस्य मल्लिनाथव्याख्यानसहितम् (दण्डान्वयखण्डान्वयसहितं च) अध्ययनम् ।

६. दिनकरीव्याख्यानसहितं न्यायसिद्धान्तमुक्तावल्याः अध्ययनम् ।

बाल्ये यौवने एव वा पूर्वसूचितानां त्रयाणां कण्ठस्थीकरणेन पश्चात् आजीवनं लाभः भविष्यति । पञ्चमहाकाव्यपाठेन भाषाज्ञानं परिनिष्ठितं भवति । 'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इति प्राचीनोक्तिः । एवम् एतादृशेन संस्कृताध्ययनेन स्वस्य संस्कृताध्ययनस्य आधारभूमिः बहुसुष्ठु भविष्यति । अतः एतादृशाय सुदृढाधारभूताय अध्ययनाय प्रत्येकं संस्कृतच्छात्रः प्रेरितः भवेत् ।

**शिक्षकेषु विज्ञप्तिः**

संस्कृतशिक्षकेषु अपि काचित् विज्ञप्तिः - प्रथमं तु वयं प्रेम्णा छात्रान् प्रेरयेम, भावात्मकवचनेन प्रेरयेम इति । द्वितीयं तु वयं यदि

पाठने विशेषोत्साहं दर्शयामः, संस्कृतेन पाठयामः, गम्भीराध्ययनाय अनुरोधं कुर्मः, साहाय्यं कुर्मः, मार्गदर्शनं कुर्मः, समयं दद्मः, गृहम् आहूय पाठयामः, तान् व्युत्पन्नान् कर्तुं प्रयतामहे तर्हि छात्राः अपि प्रतिस्पन्दनं करिष्यन्ति एव । ते अपि प्रेरिताः उत्साहिताः च भवन्ति, तेऽपि परिवृत्ताः भवन्ति एव ।

देशे सर्वत्र शिक्षकाः वदन्ति यत् छात्राणाम् उत्साहः नास्ति इति । छात्राः वदन्ति - 'शिक्षकाः न पाठयन्ति' इति । तर्हि समस्यापरिहारः कथम् ? शिक्षकाणां छात्राणां च सर्वेषां अस्माकं नवं लक्ष्यं भवेत् अस्माकं संस्कृतज्ञानस्तरवर्धनं, शास्त्राध्ययनाय योग्यतासम्पादनं, संस्कृतशिक्षणभवनस्य आधारस्य सुदृढतासम्पादनम्, उदाहरण-निर्माणम्, ज्ञानमहत्त्वाकाङ्क्षोत्पादनं च इति । सर्वेषु संस्कृतविद्यालय-महाविद्यालयेषु स्नातकस्नातकोत्तरकक्षासु च तादृशं किञ्चित् नवं वायुमण्डलं स्रक्ष्यामः, यत्र सर्वः अपि जिज्ञासावान् परिश्रमशीलश्च भवेत्, यत्र सर्वः अपि संस्कृतेन व्यवहरेत्, यत्र संस्कृतभाषा वाङ्मयी, न तु ग्रन्थमयी, यत्र लेखनं, कथनं, हसनं, चिन्तनं, संल्लपनं च संस्कृतेन भवेत्, यत्र अध्ययनस्य प्रयोजनं ज्ञानमेव, यत्र छात्राणाम् आचार्याणां च दैनन्दिनजीवने संस्कृतम् अभिव्यक्तं भवेत्, यत्र संस्कृतम् आचरणविषयः, न तु भाषणविषयः स्यात्, यत्र च छात्राः नलन्दातक्षशिलाकाञ्चीप्रभृतीनां प्राचीनविश्वविद्यालयसदृशानां विश्व-विद्यालयानां सर्जनस्य स्वप्नं पश्येयुः !

❑❑

# ४. शोकः श्लोकत्वमागच्छेत्

सर्वः अपि संस्कृतज्ञः, संस्कृतशिक्षकः, संस्कृतप्राध्यापकः च संस्कृते नितरां प्रीतिमान्, संस्कृतस्य वर्तमानदशायै नितरां शोचति च । तथापि संस्कृतस्य अपेक्षिता प्रगतिः न जाता, न वा तदर्थं सर्वेषां संस्कृतज्ञानां, वैयक्तिकरूपेण, सामूहिकरूपेण वा नियतं कार्यं विशेषतया दृश्यते । अर्थात् तस्य प्रीत्यनुगुणं शोकानुगुणं वा सक्रियता नैव दृष्टिगोचरीभवति । एवं किमर्थम् इति प्रश्नः बहुभ्यः दिनेभ्यः मां बाधते स्म । कुत्रचिद् काचित् न्यूनता अस्ति । का सा ?

निषादेन मारितं क्रौञ्चं दृष्ट्वा तस्य भार्यया क्रौञ्च्या यत् रोदनं कृतं तद् करुणक्रन्दनं श्रुतवतः महर्षेः वाल्मीकेः शोकः अभवत् । शोकाकुलः सः 'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः' इति अनुष्टुप्छन्दसा शापं दत्तवान् । 'अहं शप्तवान् खलु' इति सः पुनः शोकार्तः जातः । पश्चात् ब्रह्मणः सूचनानुसारं वाल्मीकिः तेनैव छन्दसा रामायणं रचितवान् । एतदेव वाल्मीकिरामायणे (बालकाण्डे द्वितीयसर्गे ४१तमे श्लोके) उक्तमस्ति 'शोकः श्लोकत्वमागतः' इति । यथा वाल्मीकेः शोकः श्लोकरूपेण अर्थात् रामायण-महाकाव्यरूपेण पर्यवसितः तथा अस्माकं संस्कृतज्ञानां प्रीतिः शोकः वा किं क्रियारूपेण पर्यवसितं जायमानम् अस्ति ?

संस्कृतस्य भवितव्यस्य सम्बन्धे अस्माकम् उत्तमाः कामनाः, योग्याः भव्याश्च इच्छाः, सदुद्देशाः च सन्ति इत्येतावता कार्यसिद्धिः न भवति । लक्ष्यसिद्धिम् अक्षिसात् कर्तुं कार्ययोजना, कार्यपद्धतिः, कार्यक्रमाः, कार्यकर्तारश्च तु अपेक्षिताः एव । ततोऽप्यधिकं नाम संस्कृतस्य परमम् उत्कर्षं साधयितुं प्रत्येकं संस्कृतज्ञेन स्वस्मात् उपरि आरूढेन सता परेषां विषये, अर्थात् संस्कृतविषये, संस्कृत-च्छात्रविषये, संस्कृतसेवाकार्यविषये राष्ट्रविषये च चिन्तनस्य परिश्रम-

करणस्य च प्रयत्नपूर्वकः अभ्यासः करणीयः भवेत् । स्वस्य (सर्वेषां संस्कृतज्ञानां च) तादृशाय संस्काराय काचित् व्यवस्था आवश्यकी । सा व्यवस्था लाभोद्देशरहिता स्वार्थरहिता च स्यात् । किञ्च सा सदैव सामूहिकी एव भवति । अतः स्वमनोरथं कार्यगतं कर्तुं प्रथमं तावत् दशभिः जनैः मिलित्वा संस्कृताय क्रियमाणेन प्रयासेन सह आत्मा (स्वः) अपि योजनीयः । कार्ये मनोयोगमात्रं न पर्याप्तं, शरीरेण अपि कार्यं करणीयम् । तस्मात् संस्कृतोत्थानकार्येषु मम भवतः च सक्रिय-भागग्रहणम् अपेक्षितम् ।

वैयक्तिकरूपेण सर्वे संस्कृतप्राध्यापकाः संस्कृतज्ञाश्च जीवने यशस्विनः एव । पदं, प्रतिष्ठा, धनं चेति सर्वमपि इतरेषां समानमेव भूरि प्राप्तवन्तः । परं संस्कृतज्ञाः वयं सामूहिकरूपेण किं यशस्विनः ? संस्कृतस्य योग्यस्थानप्रापणे तु इतोऽपि न । तत्र कारणं किम् ? संस्कृतज्ञानां सामूहिकसक्रियतायाः अपर्याप्तता एव । सज्जननिष्क्रियता इत्येतद् संस्कृतक्षेत्रस्य महत्तमं दौर्बल्यम् ।

यथा सर्वेषां व्यक्तिगताः आशाः आकाङ्क्षाः च भवन्ति तथा सर्वेषु संस्कृतज्ञेषु समानाः समूहगतस्वप्नाः सामूहिकमहत्त्वाकाङ्क्षाः च उत्पादनीयाः । व्यक्तिमनः इव समाजमनः (संस्कृतज्ञानां संस्कृतानुरागिणां च मनः) अपि सामूहिकमहत्त्वाकाङ्क्षारूपेण सुचिन्तितं, सुचित्रितं, सुष्ठ्ववगतं च प्रवर्धते चेत् तत् संस्कृतज्ञानां समाजमनः अर्थात् सामूहिकमहत्त्वाकाङ्क्षा सक्रियतायुक्ता सती संस्कृतक्षेत्रे अल्पेन एव कालेन अनल्पं साधयितुं शक्नुयात् । चिन्तनार्थम् अत्र कश्चन प्रश्नः - किं वयं 'कस्मै स्वप्नाय (कस्य स्वप्नस्य साकारीकरणाय) भवान् जीवेत् ?' इति स्वपुत्रं स्वच्छात्रं च पृच्छामः, बोधयामः प्रेरयामश्च ?

वयं ये संस्कृतशिक्षकाः प्राध्यापकाश्च स्मः, अस्माकं तु उपजीविका (शिक्षकप्राध्यापकपदं वेतनं च) सुरक्षिता अस्ति, किञ्च 'संस्कृत-

प्रचारकार्ये सक्रियभागस्वीकरणेन विना अपि मम किमपि भौतिकी हानिः न भवति' इति किञ्चित् वास्तविकं सत्यं यदस्ति तद् तादृशं परोक्षज्ञानम् अस्माकं निष्क्रियतायां कदाचित् परोक्षकारणं भवितुम् अर्हति । अकर्मण्यताव्याधितः आत्मानं रक्षितुं वयम् अस्माकम् अद्यतनच्छात्राणां विषये चिन्तयामः चेत् वरम् । दश-विंशवर्षाणाम् अनन्तरं तेषां स्थितिः का भवेत् ? तेषाम् उपजीविका का स्यात् ? समाजे तेषां स्थानं किं स्यात् ? राष्ट्रविकासे समाजजीवने च तेषां पात्रं किं स्यात् ? किम् अस्माकं छात्राणां भविष्यम् उज्ज्वलं कर्तुम् अस्माकम् अपि किञ्चित् कर्तव्यं नास्ति ? संस्कृत-विद्यालयानाम् ऊर्णनाभजालानि, मासेभ्यः अस्पृष्टाः तत्रत्याः धूलि-कणाः, संस्कृतस्य अपुनर्मुद्रितानि असङ्ख्यानि जीर्णानि पुस्तकानि, कीटाहारविषयभूताः ताडग्रन्थाः, भविष्यविषयकचिन्तया क्लान्तानि छात्रनेत्राणि च किमस्माकं प्रेरणार्थम् अपर्याप्तानि ? किमेतानि अस्माकं हृदयानि न विद्रावयन्ति ? यस्य संस्कृतप्रेम अस्ति, यस्य स्वाभिमानः अस्ति, यस्य संवेदनम् अस्ति, यस्य ज्ञानपरम्पराविषये गर्वः अस्ति, यस्य शास्त्रसंरक्षणविषयकचिन्ता अस्ति, यस्य संस्कृतच्छात्राणां विषये अनुकम्पः अस्ति, यस्य राष्ट्रियजीवनादर्शेषु श्रद्धा अस्ति, संस्कृतोन्नत्या एव राष्ट्रोन्नतिः इत्यत्र यस्य विश्वासः अस्ति, यस्य वर्तमानकठिनपरिस्थितेः गाम्भीर्यस्य अवगमनम् अस्ति सः संस्कृतज्ञः, सः संस्कृतशिक्षकः कार्यारम्भं कुर्यात् ।

वयं संस्कृतज्ञाः आत्मानम् उद्दिश्य प्रश्नं कुर्मः - १) अहं संस्कृतात् किं किं प्राप्तवान् ? २) अहं संस्कृताय किं किं प्रदत्तवान् ? (विद्यालये वयं यत् पाठयामः तद् अस्माकं 'प्रदानं' (Contribution) भवितुं नार्हति, यतः तदर्थम् अस्माभिः वेतनं प्राप्यते, तत्तु प्राप्तेः भागः) द्वितीयप्रश्नस्य उत्तरं प्रथमप्रश्नस्य उत्तरापेक्षया अधिकं भवेत् । यतः 'जीवने यावद् आदानं स्यात् प्रदानं ततोऽधिकम्' इति एषा

भारतीयजीवनादर्शपरम्परा ।

अद्य संस्कृतविकासाय आवश्यकता अस्ति 'अटनस्य' । स्वस्य स्थाने संस्कृतकार्यक्रमाणाम् आयोजनाय अटनीयम् । जनसम्पर्काय अटनीयम् । कक्ष्याणाम् आयोजनाय, छात्रसङ्ग्रहाय, पाठनाय च अटनीयम् । धनसङ्ग्रहाय अटनीयम् । 'अहं संस्कृतविद्वान्' स्यां, तथापि मयापि अटनीयं भवेत् । शास्त्रपरम्परारक्षणार्थम् अपि समाजे या अनुकूलमानसिकता निर्मातव्या, यस्याः मानसिकतायाः कारणतः एव शास्त्रपठनाय छात्राः आगच्छेयुः, शास्त्रपाठनव्यवस्था च भवेत्, तस्याः अनुकूलमानसिकतायाः निर्माणार्थं, जनजागरणार्थं, जन-प्रबोधनार्थं, जनसङ्ग्रहार्थं च अटनीयम् एव भवति खलु ? अध्येतॄणां निर्माणम् अहं न करोमि चेत् विदुषः मम पाठान् कः श्रोष्यति ? अतः एतस्मै 'अटन'कार्याय अहं कियन्तं समयं दातुं सिद्धः इत्येतदनुगुणं, मम समयदानानुपातानुगुणं, संस्कृतविकासः अपि भविष्यति । जनसम्पर्ककार्ये येषां प्रखरतमः आतपः शीतलायते, संस्कृतप्रचाराय क्रियमाणे प्रवासे लोकयानस्य पञ्चत्रिंशत्सङ्ख्याकम् अन्तिमम् आसनम् अपि 'सोफायते' (सुखासनायते) क्वचित् लब्धं यत्किञ्चिदपि भोजनं मिष्टान्नायते, ते खलु अटनजातायाः पाद-वेदनायाः, प्रवासजातस्य शरीरश्रमस्य वा आनन्दम् अनुभवितुं शक्नुयुः !

संस्कृतप्रचारकार्याय अन्येषाम् उत्साहः अस्ति उत न, अन्ये सन्ति उत न, अन्येषां सहकारः अस्ति उत न इति एते अंशाः वास्तविकाः निर्णयबिन्दवः न । प्रश्नः केवलम् - 'अहं कार्यं करोमि, कुर्वन् अस्मि, उत न ?' इति । यद्यहम् उपविशन्नेव अस्मि तर्हि संस्कृतमपि उपविशत् एव भविष्यति, यद्यहं स्वपिमि तर्हि संस्कृतमपि स्वप्स्यति, यद्यहं विरमामि तर्हि संस्कृतमपि विरंस्यति, यद्यहं मन्दगत्या चलामि तर्हि संस्कृतमपि मन्दगत्या चलिष्यति, यद्यहं धावामि तर्हि संस्कृतमपि

धाविष्यति, यद्यहं गर्जामि तर्हि संस्कृतमपि गर्जिष्यति । अतः प्रश्नः 'अहम्' । अहमेव ।

अस्य लेखस्य वाचकेषु ये युवानः मध्यवयस्काः च सन्ति तेषु मम कश्चन प्रश्नः । यदा अहं वृद्धः भविष्यामि, सेवानिवृत्तः भविष्यामि, जीर्णशरीरः भविष्यामि, दण्डसहायः भविष्यामि तदा मया संस्कृत-प्रचारकार्यं करणीयम्, उत यदा मम शरीरे इतोऽपि शक्तिः अस्ति, यदा मम पादौ इतोऽपि सम्यक् चलतः तदा एव करणीयम्.. ? चिन्त्यताम् । ये अन्याय्यं द्रष्टुं न शक्नुवन्ति, ये हताशभाषणं श्रोतुं न शक्नुवन्ति, ये संस्कृतापमाननं सोढुं न शक्नुवन्ति, ये ज्ञानपरम्पराह्रासं नेच्छन्ति, ये संस्कृतं पराजितं चिन्तयितुं न शक्नुवन्ति, ये संस्कृतोपेक्षाम् अङ्गीकर्तुं न शक्नुवन्ति, ये अस्मदीयानामेव अकर्मण्यतायाः साक्षिणः भवितुं न शक्नुवन्ति ते सर्वेऽपि इदानीमेव युद्धस्तरे संस्कृतप्रचारकार्यं कुर्युः ।

अस्माभिः सर्वैः संस्कृतज्ञैः संस्कृतप्राध्यापकैश्च कार्यत्रयं करणीयम् ।

१. स्वयं प्रतिदिनं शास्त्राणाम् अध्ययनं, प्रतिदिनं निःशुल्कं शास्त्राणाम् अध्यापनं च ।
२. प्रतिवर्षं संस्कृतकार्याय स्वयं धनसमर्पणं, धनसङ्ग्रहं कृत्वा दानं च ।
३. संस्कृतकार्यक्रमाणाम् आयोजनाय स्वयं कार्यकरणम्, इतरेषां द्वारा कार्यकारणं च ।

अस्माभिः शक्तिसञ्चयः कर्तव्यः । सा च शक्तिः द्विधा । ज्ञानशक्तिः सङ्घशक्तिः चेति । अर्थात् वैयक्तिकरूपेण ज्ञानार्जनस्य लक्ष्यं, सामूहिकरूपेण शक्तिनिर्माणस्य (जनशक्तिसङ्घटनशक्ति-निर्माणस्य) लक्ष्यम् । अतः अस्मभ्यम् आह्वानद्वयम् - 'ज्ञानमुपास्व ! बलमुपास्व !!' इति । अस्माकं चिन्तनं वैश्विकं, कार्ययोजना राष्ट्रिया,

कार्यक्रमाः तु स्थानीयाः । वयं संस्कृतज्ञाः संवेदनहीनाः न स्मः । अतः वयं संस्कृतकार्येण सह असम्बद्धाः सन्तः स्थातुं न शक्नुयाम ।

प्राचीनाः विद्वांसः तावत् यावज्जीवं शिक्षार्थिनाम् अध्यापने एव न्यस्तमनसः आसन् । प्रतिदिनपाठनाय एव दत्तसमयाः आसन् । अद्यापि बहवः वृद्धाः पारम्परिकविद्वांसः एवमेव सन्ति । एतस्मिन् प्रसङ्गे वयं 'छात्राः अनधिकारिणः, अयोग्याः, अमेधाविनः, अनुत्साहिनः, अश्रद्धालवः' इति नञ्समासस्यैव बहुधा प्रयोगं कुर्मः चेत् तद् विपरीतमेव परिणामं जनयेत् । तेन समस्यापरिहारः अपि न भवति । छात्राणाम् अभिप्रेरणं कर्तुम् असमर्थाः वयं स्वस्य असाफल्यम् अङ्गीकर्तुम् अनिच्छन्तः किं छात्रान् दूषयन्तः न स्मः खलु ? तस्मिन् कथने वास्तविकतायां सत्यां चेदपि लभ्यमानाः छात्राः तु ते एव इति कारणात् विद्यमानेषु एव कांश्चित् छात्रान् चित्वा प्रेरयित्वा च अस्माकं सर्वविधशक्तीः प्रतिभाः च उपयुज्य तान् अध्ययनशीलान्, व्युत्पन्नान्, चिन्तनशीलान्, अवगमनशीलान्, गवेषणशीलान्, नवप्रयोगशीलान्, उद्यमशीलान्, कार्यशीलान्, समर्पणशीलान् च कृत्वा तेषां द्वारा दशविंशवर्षाणाम् अनन्तर-कालस्य समाजाय राष्ट्राय च नेतृत्वप्रदानस्य, संस्कृतनेतृत्वप्रदानस्य उत्तरदायित्वम् अद्यतनसंस्कृतशिक्षकाणाम् अस्माकम् अस्ति । अस्माकं स्वप्नभूतस्य संस्कृतशिक्षणस्य उद्देश्यं तत् । संस्कृत-विद्यापीठानां, पाठशालानां, संस्कृतविभागानां च जीवितोद्देश्यमपि तदेव ।

प्रातः सायं वा कतिचन छात्रान् गृहम् आहूय काव्यं, व्याकरणं, शास्त्रं च निःशुल्कं पाठयेम । संस्कृतज्ञस्य गृहमपि 'विद्यालयः' भवेत् । एतादृशपाठने तु ज्ञानमेव लक्ष्यं भवति । आचार्यः श्रद्धया पाठयति चेत् अवश्यमेव कतिचन छात्राः आगच्छेयुः । एषा गृहपाठ-परम्परा उज्जीवनीया । शास्त्ररक्षणस्य एषः एव उपायः । भारतस्य

पण्डितपरम्परा अपि एषा एव । एतादृशरूपेण ये निःशुल्कं पाठयन्ति तेषां गुरुपूर्णिमादिने पूजा कर्तव्या । समाजे एतादृशानां गुरूणां कश्चन अपूर्वः नैतिकः अधिकारः भवति । न्यूनातिन्यूनं संस्कृतक्षेत्रे 'अध्ययनम् अध्यापनम्' इत्येतत् द्वयं प्रत्येकं संस्कृतज्ञस्य आद्यं कर्तव्यम् इति भावः व्यवहारे आनेतव्यः, तादृशम् आचरणम् अपि व्यवहारे आनेतव्यम् । संस्कृतभाषायाः उज्जीवनं नाम एतादृश्याः परम्परायाः उज्जीवनम् । अध्ययनम् अध्यापनं चैव संस्कृतज्ञगतं प्रतिष्ठास्थानम्, आदरकारणं, गौरवहेतुः च ।

अद्य संस्कृतज्ञानां वैदुष्येण सह नेतृत्वस्य संयोगः भवेत् । संस्कृतप्रेम्णा सह कार्यकरणस्य प्रवृत्तिः भवेत् । सज्जनत्वेन सह क्षात्रभावस्य अपि प्राकट्यं भवेत् । 'सुरक्षितजीवन'चिन्तनेन सह साहसमनोभावः अपि भवेत् । ताडपत्राणां शास्त्रपङ्क्तीनां च अध्ययनेन सह सङ्गणकस्य अपि अध्ययनं भवेत् ।

संस्कृतज्ञानाम् अस्माकं ज्ञानस्य मूल्याङ्कनं स्वस्य विनयेन (अनहङ्कारेण) करणीयं, भाषणस्य मूल्याङ्कनम् आचरणेन, संस्कृत-प्रीतेः मूल्याङ्कनं कार्यतत्परतया, समर्पणस्य मूल्याङ्कनं समयदानेन, संस्कृतनिष्ठतायाः मूल्याङ्कनं परिश्रमेण, संस्कृताभिमानस्य मूल्याङ्कनं संस्कृतसम्भाषणेन च करणीयम् ।

संस्कृतस्य विकासं सम्पादयितुं संस्कृतज्ञैः अस्माभिः महाकार्याणि करणीयानि इति नास्ति । लघूनि अपि कार्याणि कुर्याम, किन्तु प्रतिदिनं कुर्याम । ऊनत्रिंशत्सहस्रपादौन्नत्ययुतस्य गौरीशङ्कर-(Everest)शिखरस्य आरोहणाय क्रियमाणस्य प्रयत्नस्य प्रथमं पदं तु ऊनत्रिंशदङ्गुलपरिमितमेव भवति । कार्यं तु सर्वदा प्रारम्भे लघु एव भवति । लघुभिः एव कार्यैः महासिद्धिः भवति । अतः लघु कार्यं भवतु नाम, कार्यप्रवृत्तेन भवितव्यम् । मम भवतः च लघु कार्यं, स्वल्पः समयः, ईषद् अपि संस्कृतसम्भाषणं, किञ्चित् अवधानम्,

अल्पः कार्यसहभागः, यत्किञ्चित् धनसाहाय्यं च संस्कृतप्रचारकार्यं महोन्नतं शिखरं प्रापयेत् ।

कठिनसमयः स्थायी न, अपि तु कठिनजनः स्थायी । संस्कृतकार्यमिदं प्रवाहविरुद्धं तरणमिव भासेत । प्रवाहदिशि तरणं सरलम् । विरुद्धं तरणाय साहसं, शक्तिः, धैर्यं च आवश्यकानि । यस्य संस्कृतशिक्षकस्य प्राध्यापकस्य च जीवनध्येयव्रतं संस्कृतशास्त्रप्रचारः, यस्य चरितं निष्कलङ्कं धौतवस्त्रं, वाणी शक्तिशालिनी लोहचुम्बिका, चिन्तनं स्फटिकस्पष्टं, कार्यं परिणामकेन्द्रितं तस्य किमस्ति असाध्यम् ?

वयं यदा एकस्मिन्नेव स्थाने, एकस्मिन्नेव वातावरणे, एकविधम् एव कार्यं कुर्वन्तः भवामः, तस्य एकस्यैव वलयस्य अन्तः भवामः, तदा चिन्तनं सदा समानमेव भवति । नूतनं किमपि न स्फुरति, मनसि पूर्वाग्रहाः निश्चितधारणाः वा निर्मिताः भवन्ति । किं संस्कृतज्ञानाम् अस्माकं दृष्टिः एतादृशरूपेण बाधिता न स्यात् ? किम् एतदेव अस्माकं हताशतायाः, नूतनमार्गानुसरणानिच्छायाः च कारणं न स्यात् ? किं वयं सर्वकारीयनीतिनामके कारागृहे बद्धाः, सामाजिकपरिस्थितिनामके कारागृहे वा बद्धाः ? अथवा किं वयम् अस्माकमेव मनसः चिन्तनरीतेः कारागृहे बद्धाः ?

संस्कृतस्य वर्तमानपरिस्थितेः परिवर्तनं न शक्यम् इति यदि भवान् संस्कृतज्ञः एव चिन्तयति तर्हि निश्चयेन तत् परिवर्तनं न शक्यम् । अतः प्रथमं भवतः मम च परिवर्तनं भवेत् । 'परिवर्तनम् अपेक्षितं, शक्यं च, परन्तु मम समयः नास्ति, अन्यानि उत्तरदायित्वानि सन्ति, समस्याः सन्ति' इति भवान् चिन्तयति चेत् तदापि परिवर्तनं न शक्यम् । अतः अपि प्रथमं भवतः मम च परिवर्तनं भवेत् । 'अहमपि कार्यं करिष्यामि, परम् इदानीं न, अनन्तरम्' इति चेत्, तत् 'अनन्तरं' सर्वदैव अनन्तरमेव स्थास्यति । अतः अपि प्रथमं भवतः

मम च परिवर्तनं भवेत् । अस्मासु, अस्मान् परितः च परिवर्तनं तु अवश्यम्भावि । यतः तदभावे अस्माकं स्थितिः एव न भवेत् । वयं विनष्टाः स्याम । संस्कृतज्ञानाम् अस्माकं सामूहिकं नेतृत्वं नैतिकं नेतृत्वं चेतना-कल्पकतायुक्तं मानसं च किञ्चित् योग्यं, सुखदम्, उत्कर्षकरं च परिवर्तनम् आनेतुं शक्नुयात् ।

संस्कृतज्ञानाम् अस्माकं कृते कश्चन महान् अभिशापः नाम अस्माकमेव परस्परं कलहः । विद्यापीठेषु, विश्वविद्यालयविभागेषु, संस्कृतज्ञसमूहेषु च संस्कृतज्ञाः वयम् एतेन एव कार्येण अर्थात् अपरस्य दूषणेन (स्वस्य प्रशंसया च !), स्वस्य उपरितनाय अधिकारिणे प्रतिदिनम् असत्यदुरुद्देशपूर्णवाक्यैः अनामधेयपत्रलेखनेन च समग्रं जीवनं यापयामः !

किमर्थं तथा भवति ? तत्र मुख्यं कारणं नाम अस्माकं पुरतः करणीयम् अन्यत् किञ्चित् महत् उदात्तं च लक्ष्यं नास्ति । यदा मम जगत् सीमितं लघु च भवति तदा तत्रत्यः लघुः अपि विषयः महद्यते, अपरस्य परमाणुपरिमाणकः अपि दोषः पर्वतायते । (स्वस्य पर्वताकारः अपि दोषः अणूयते ।) अन्यस्य पर्वताकारः अपि गुणः अणूयते । (स्वस्य अण्वाकारः अपि गुणः पर्वतायते ।) लघुः अपि विषयः तृतीयविश्वमहायुद्धाय पर्याप्तः भवति । अन्यस्य सामान्या अपि काचित् उक्तिः कतिचन वर्षाणि यावत् वैरं साधयितुं पर्याप्तम् इन्धनम् इव आचरति । अतः यदि अस्माकं सर्वेषां सम्मुखे महत् दिव्यं भव्यं च किञ्चित् कार्यं भवति तर्हि अस्माकं मनः महति व्यापृतं तिष्ठेत्, न तु क्षुल्लकेषु लज्जास्पदेषु विषयेषु ! कस्याश्चित् रेखायाः ह्रस्वीकरणाय उत्तमः उपायः नाम तस्याः पार्श्वे इतोऽपि दीर्घतररेखायाः अङ्कनम् । १९४७ तमवर्षात् पूर्वं समग्रे भारते आकन्याकुमारि आहिमालयं प्रतिग्रामं यथा देशभक्तेः सञ्चारः आसीत्, प्रतिव्यक्तिहृदयं राष्ट्राभिमान-पूर्णम् आसीत् तथा आगामिषु वर्षेषु सर्वेषु अपि संस्कृतज्ञेषु संस्कृत-

शिक्षकेषु च संस्कृतप्रेम्णः, संस्कृतकार्योत्साहस्य, राष्ट्रोत्थानभावस्य च ध्येयविद्युत्सञ्चारः कारणीयः ।

ये संस्कृतज्ञाः दीर्घं तपः कर्तुं सिद्धाः, न तु क्षणिकम् उद्वेगम् आवेशं वा; ये परिश्रमं कर्तुं सिद्धाः, न तु केवलम् उपदेशं; ये स्वधनं दातुं व्ययितुं च सिद्धाः, न तु केवलं परिग्रहीतुं; ये अधः भूमौ श्रोतृ-वृन्दे अपि उपवेष्टुं सिद्धाः, न केवलं मञ्चे; ये स्वयं कार्यं कर्तुं सिद्धाः, न केवलं कारयितुं; ये सम्मार्जन्या स्वच्छतामपि कर्तुं सिद्धाः, न तु केवलं पुष्पमालार्थं कण्ठावनमनाय - तादृशाः संस्कृतशिक्षकाः प्राध्यापकाश्च धने सति असत्यपि, कष्टे सति असत्यपि, आनुकूल्ये सति असत्यपि, साधनेषु सत्सु असत्सु अपि, सहायेषु सत्सु असत्सु अपि, समये सति असत्यपि विना बाधाः संस्कृतकार्यं निरन्तरं कुर्वन्तः एव स्युः, यथा शरीरसामर्थ्ये सति असत्यपि हृदयम् अविरतं प्रतिक्षणं च कार्यं करोति, न क्षणमपि विरमति, न च विरामचिन्तनं करोति ।

संस्कृतसेवकानाम् अस्माकं ग्रीष्मशिशिरयोः भेदः न भवेत्, सुखकष्टयोः अपेक्षा न भवेत्, गृहकार्यालययोः अन्तरं न भवेत्, दिनरात्र्योः परिगणना न भवेत्, निजपरयोः पार्थक्यं न भवेत्, स्वलाभहान्योः दृष्टिः न भवेत्, कीर्त्यकीर्त्योः अवधानं न भवेत्, स्तुतिनिन्दयोः जीवनमरणयोश्च चिन्ता न भवेत् ।

संस्कृतशिक्षकाणां प्राध्यापकानां च अस्माकं लेखनी खड्गायेत । बुद्धिः असिधारायेत । वाणी गङ्गायेत । मुखमण्डलं भगत्सिंहायेत । जीवनं विवेकानन्दायेत ।

यदि अस्माकं संस्कृतस्थितिविषयकः शोकः श्लोकत्वमागच्छेत् तर्हि पुनरपि नृत्तं भवेत्, ढक्कायाः नवपञ्चवारं निनादः भवेत्, वागर्थाविव सम्पृक्तयोः वन्दनं भवेत्, मोदकहस्तः लेखनीपाणिः भवेत्, विद्वदौषधं राष्ट्रौषधं भवेत् । श्वस्तनः सूर्योदयः संस्कृतस्य नवोदयः एव भवेत् ।

❑❑

# ५. संस्कृतप्रधानं जीवनम्

प्रातः कार्यालयं गन्तुम् उद्युक्तं पतिम् उद्दिश्य पत्नी उक्तवती - ''अद्य सायं किञ्चित् शीघ्रम् आगन्तुं शक्नोति किम् ? विपणिं गत्वा एकः वस्त्रकटः आनेतव्यः अस्ति । श्वः अतिथयः आगमिष्यन्ति खलु । गृहे वस्त्रकटः नास्ति'' इति । तदनुगुणं पतिः (राष्ट्रियस्वयंसेवकसङ्घस्य कश्चन 'नगरकार्यवाह'पदस्थः कार्यकर्ता) सायं शीघ्रं गृहं प्राप्तवान् । पत्न्या सह विपणिं प्रति गमनसमये सः तां पृष्टवान् - ''अस्माकं गृहस्य प्रकोष्ठस्य परिमाणं किम् ?'' इति । सा उक्तवती - ''8X10 हस्तपरिमितं स्यात्'' इति । तदा पतिः उक्तवान् - ''पश्यतु, सङ्घकार्यालये अपि एकस्य कटस्य आवश्यकता अस्ति । तत्रत्यस्य प्रकोष्ठस्य परिमाणं 10X12 अस्ति । अतः किञ्चित् बृहदेव क्रीणीयाम किम् ?'' इति । सा तु पत्युः अनुरूपा पत्नी आसीत् । अतः तादृशः एव कटः क्रीतः, यश्च सङ्घकार्यालयस्य प्रकोष्ठस्य आकारस्य अनुगुणः आसीत् ।

अतिथयः आगत्य गताः । सप्ताहस्य अनन्तरं सङ्घकार्यालये गोष्ठी आसीत् । कार्यकर्तारः तदर्थं वस्त्रकटं नीत्वा अनन्तरदिने प्रत्यर्पितवन्तः । पक्षानन्तरं पुनः नीतवन्तः, प्रत्यर्पितवन्तः च । सप्ताहानन्तरं पुनः तथैव अभवत् । तदनन्तरं पत्नी उक्तवती - ''अस्माकं गृहे तु विरलतया अतिथयः आगच्छन्ति । अतः कटः कार्यालये एव भवतु । यदा गृहे आवश्यकता भविष्यति तदा ततः आनेष्यामः'' इति ।

अपरः कश्चन सङ्घकार्यकर्ता । १९८२ तमं वर्षम् आसीत् तद् । 'केनरा बैंक्'नामके वित्तकोषे कार्यं करोति स्म सः । पदोन्नतिः तेन प्राप्ता । परं तदा तस्मिन् वित्तकोषे कश्चन नियमः आसीत् । दक्षिणभारतीयेन अधिकारिणा पदोन्नतिप्राप्त्यनन्तरं कञ्चित् कालं

यावत् उत्तरभारते कार्यं करणीयम् इति। कथञ्चित् स्थानपरिवर्तनं भवत्येव । अतः गत्वा सः सङ्घस्य अधिकारिणम् उक्तवान् - 'तादृशं स्थानं सूचयतु यत्र सङ्घकार्यं न्यूनम् अस्ति, यत्र मम गमनेन अहं सङ्घकार्यं वर्धयितुं शक्नुयाम् । तादृशस्थानाय एव गमनम् अहं प्रार्थयिष्ये' इति ।

राष्ट्रियस्वयंसेवकसङ्घस्य प्रारम्भानन्तरं कतिचन वर्षाणि अतीतानि आसन् । नागपुरे बहवः छात्राः स्नातकपर्यन्तं पठित्वा स्नातकोत्तराध्ययनाय वाराणसी-प्रयाग-लखनऊ-देहलीप्रभृतिभ्यः बहुभ्यः नगरेभ्यः योजनापूर्वकं गतवन्तः । किमर्थम् ? कथञ्चित् कस्मिंश्चिदपि विश्वविद्यालये पठनीयमेव । नागपुरे पठनापेक्षया अन्यान्यनगरेषु स्थित्वा पठ्यते चेत् तत्र सर्वत्र सङ्घशाखाः आरब्धुं शक्यन्ते खलु ? स्वकार्यं, स्वामिकार्यं च ।

एतादृशानि असंख्यानि उदाहरणानि सन्ति यत्र कार्यकर्तारः स्वजीवनं स्वेन स्वीकृतस्य ध्येयस्य, ध्येयव्रतस्य, ध्येयकार्यस्य च अनुकूलं यथा स्यात् तथा रूपितवन्तः । तादृशस्य प्रयासस्य मूलं कारणं तु तेषां जीवने प्रधानतमम् आसीत् समाजकार्यं, राष्ट्रकार्यं, तन्नाम पवित्रं सङ्घकार्यम् । अतः अन्यत् सर्वम्, अर्थात् अध्ययनं, वृत्तिः, उपजीविका, गृहजीवनम् इत्यादिकं सर्वमपि यथा ध्येयानुकूलं स्यात् तथा तैः स्वजीवनरचना कृता । जीवनस्य प्रत्येकस्मिन् अपि अंशे ध्येयदृष्टिः । मया क्रियमाणं प्रत्येकमपि कार्यं मम प्रियतमस्य ध्येयस्य पूर्तौ उपकारकं भवेत्, आनुकूल्यं सम्पादयेत्, चिक्रोडसेवां कुर्यात् च इति प्रयत्नः ।

वयं संस्कृतभारत्याः कार्यकर्तारः अपि चिन्तयेम - 'संस्कृतानुरागिणः मम जीवनं ध्येयानुकूलं, कार्यानुकूलम्, अधिकाधिकं संस्कृतप्रधानं च कथं स्यात्' इति । मम मतिः, गतिः, धृतिः चेति त्रयम् अपि संस्कृतप्रधानं भवेत् । एषः एव मम संस्कृतानुरागित्वस्य

कार्यकर्तृत्वस्य वा निकषः ।

सा अभिव्यक्तिः, सा च संस्कृतप्रधानता केन प्रकारेण भवितुम् अर्हति ? यदि मम भाषणं संस्कृतेन अपि भवति, यदि मम लेखनं संस्कृतेन अपि भवति, यदि मम वार्षिकव्यये कतिचन रूप्यकाणि मया संस्कृतप्रचारकार्याय अपि व्ययीक्रियन्ते, यदि शुभाशयपत्र-प्रेषणसमये, निमन्त्रणपत्रमुद्रणसमये तत्र संस्कृतवाक्यानि अपि भवन्ति, यदि मम अपत्यानि अहं गृहे संस्कृतमपि पाठयामि (उपजीविकानिमित्तं महाविद्यालये यत्किमपि पठतु नाम, परं गृहे ?), उपायनदानसमये यदि अहं संस्कृतस्य पुस्तकानाम् अपि उपायनं करोमि, यदि मम गृहे प्रवेशमात्रेण एतत् गृहं संस्कृतगृहम् इति केनचित् प्रकारेण ज्ञातं भवति, यदि मम संस्कृतप्रेम मम सहधर्मिण्याम्, अपत्येषु च सङ्क्रान्तम् अस्ति, यदि अहं सम्भाषणसन्देशादिपत्रिकाणां ग्राहकः वाचकश्च, यदि अहं नवीनसंस्कृतपुस्तकानां पठनेन आनन्दम् अनुभवामि, यदि मम दिनस्य २४ घण्टासु स्वल्पं वा समयं संस्कृत-कार्याय (शास्त्राध्ययनाय, निःशुल्कपाठनाय, प्रचारकार्याय वा) व्ययीकरोमि तर्हि कथयितुं शक्यते यत् मम भवतः च चिन्तनं, कार्यं, भाषणम्, आचरणं, जीवनम् चेति एकैकमपि संस्कृतप्रधानम् इति ।

विवाहावसरे सामान्यतः वैद्यः वैद्याम् एव परिणयति, सङ्गणकज्ञः सङ्गणकज्ञायाः अन्वेषणं करोति, तर्हि संस्कृतज्ञः किमर्थं संस्कृतज्ञायै प्राथमिकतां न दद्यात् ? एतदपि सत्यं यत् द्वयोर्मध्ये अन्यतरम् अन्यतरां वा विवाहस्य अनन्तरं संस्कृतज्ञं संस्कृतज्ञां वा कुर्मः चेत् संस्कृतज्ञानां सङ्ख्यावृद्धिः एव इति । परं तथा करणीयम् इति दृष्टिः अपेक्षिता इति मनसि स्थापयामः । संस्कृतज्ञयोः विवाहेन संस्कृतगृहनिर्माणे, संस्कृतमातृभाषिणां परम्परायाः पुनरुज्जीवने च आनुकूल्यं भवेत् । एवं विवाहे अपि संस्कृतप्रधानता भवितुम् अर्हति ।

योजना-आयोगे नवमपञ्चवार्षिकयोजनायाः सज्जता प्रचलति स्म ।

तदा तत्र शिक्षाविभागस्य परामर्शदाता आसीत् श्री नी. गोपाल-स्वामी । (प्रकृतं निर्वाचनायुक्तः ।) शिक्षामन्त्रालयस्य अधिकारी कश्चन गोपालस्वामिनः समीपं गत्वा तदीयानां केषाञ्चित् विभागानां कृते धनराशिं वर्धयितुं प्रार्थितवान् । श्रीगोपालस्वामिमहोदयः तम् उक्तवान् - ''यदि भवान् संस्कृतस्य कृते अर्थसङ्कल्पनां पञ्चगुणम् अधिकं करोति तर्हि भवतः अपेक्षानुसारम् अन्यविभागानां धनराशिं वर्धयिष्यामि'' इति । (अधिकारी अङ्गीकृतवान् च) एषा गोपाल-स्वामिमहोदयस्य संस्कृतप्रधानता ।

बेङ्गलूरुनगरस्य कश्चन व्याकरणप्राध्यापकः श्रीमान् महाबलेश्वरभट्टः । बहूनि वर्षाणि यावत् सः अनध्ययनविरामदिनेषु संस्कृतभारत्याः योजनानुसारम् अन्यराज्यम् अन्यनगरं वा गत्वा व्याकरणं पाठयति स्म । तस्य सर्वेषामपि विरामदिनानाम् उपयोगः कथमिति निर्णयाधिकारं सः संस्कृतभारत्यै दत्तवान् आसीत् । एषा तस्य संस्कृतप्रधानतायाः एकम् उदाहरणम् । (तस्य तादृशानि बहूनि उदाहरणानि सन्ति इति तु अन्यः विषयः ।)

गते वर्षे नागपुरे आयोजितस्य संस्कृतशिक्षकाणां राष्ट्रियाधिवेशनस्य प्रसङ्गः । कश्चन प्राध्यापकः द्वन्द्वे पतितः । कथमित्युक्ते, एतदधिवेशनदिनेषु एव अन्यत्र काचित् सङ्गोष्ठी आसीत् । यदि सः तां सङ्गोष्ठीम् अगमिष्यत् तर्हि सः मार्गव्ययमपि प्राप्स्यत्, तस्य प्रतिष्ठा अपि अवर्धिष्यत, नागपुराधिवेशनागमनेन स्वयमेव व्ययः कर्तव्यः, किञ्च स्वप्रचारः अपि नास्ति इति । तथापि सः नागपुराधिवेशनमेव आगतवान् । तत्र कारणं तस्य संस्कृतप्रधानता ।

भारतीयमजदूरसङ्घस्य वित्तकोषस्य कर्मचारिणां सङ्घस्य कश्चन अखिलभारतीयमन्त्री । अधिकारिरूपेण पदवृद्धिः तेन यदा यदा प्राप्ता तदा सः प्रत्येकवारं तां पदवृद्धिं, तान् अवसरान् च

परित्यक्तवान् । ये तावत् तेन सह सहकर्मिणः आसन् तेषु केचन महाप्रबन्धकाः(General Managers) अपि अभवन्, परम् एषः तु आजीवनं लिपिकाररूपेण एव स्थितवान् । किमर्थम् ? यदि पदवृद्धिं स्व्यकरिष्यत् तर्हि सः अधिकारी अभविष्यत्, तदा सः कर्मचारिसङ्घस्य कार्यं कर्तुं न अशक्ष्यत् । बैङ्क्कर्मचारिणां सेवा करणीया इत्येकेन एव हेतुना दारिद्र्यस्य स्वयमालिङ्गनं कुर्वन् आजीवनं लिपिकारः सन् सः अतिष्ठत् । एषा तस्य ध्येयनिष्ठता । भारतीयमजदूरसङ्घे तादृशाः असंख्याः प्रेरणामूर्तयः सन्ति ।

कश्चन सेवाभारत्याः कार्यकर्ता । स्नातकोत्तरकक्ष्यायां विशेषयोग्यतां प्राप्य उत्तीर्णः सः । पश्चात् सः सर्वकारीय-कर्मचारिरूपेण, स्वस्य मातुलस्य संस्थायां प्रबन्धकरूपेण, विद्यालयशिक्षकरूपेण चेति युगपत् वृत्त्यवसरत्रयं प्राप्तवान् । सः अन्ते शिक्षकवृत्तिमेव चितवान् । अहं तं 'किमर्थं भवान् शिक्षकः जातः ?' इति पृष्टवान् । सः उक्तवान् - 'शिक्षकस्य बहूनि विरामदिनानि भवन्ति, तेन अहं समाजसेवाम् अधिकां कर्तुं शक्नुयाम्' इति । वृत्तिचयनावसरे अपि ध्येयप्रधानं चिन्तनम् ।

कश्चन सङ्घकार्यकर्ता । उपजीविकार्थं वाणिज्यं करोति । परं सः स्वस्य वाणिज्यस्य विस्तारविषये न चिन्तयति स्म । 'किमर्थं न ?' इति मया पृष्टे तस्य उत्तरम् आसीत् - ''इदानीं यावद् अहं वाणिज्यं करोमि, तावता मम गृहव्यवस्था सामान्यरूपेण तु भवति । ततोऽप्यधिकं धनं सम्पाद्य किं करणीयमस्ति ? किञ्च तस्य धनसम्पादनम् इत्यस्य अन्त्यमपि नास्ति । मया किञ्चित् समाजकार्यमपि करणीयमस्ति । तस्य कर्तव्यस्य कृते अपि मया समयः दातव्यः अस्ति, अतः अहं वाणिज्यविस्तारं न, अपि तु क्रमशः मम समयदानस्य विस्तारं कर्तुम् इच्छामि'' इति !

स्वस्मै स्वल्पं, समाजाय सर्वस्वम् इति, अर्थात् स्वस्य कृते,

स्वपरिवारस्य कृते च यावदनिवार्यं तावद् न्यूनतमं स्थापयित्वा शिष्टं सर्वमपि मम समयं, धनं, प्रतिभां, शक्तिं च संस्कृताय समर्पयामि इति प्रत्येकं संस्कृतज्ञः चिन्तयितुं प्रारभते चेत् संस्कृतप्रचारेतिहासे सुवर्णाध्यायस्यैव प्रारम्भः भवेत् ।

श्रीरामपट्टाभिषेकानन्तरं सीता सर्वेभ्यः उपायनानि दत्तवती । अन्ते हनुमान् अवशिष्टः आसीत् । तस्मै किं दद्याम् इति चिन्तयन्ती सा स्वकण्ठे विद्यमानां नवरत्नखचितां मणिमालामेव निष्कास्य दत्तवती । हनुमान् तु तां मालां स्वीकृत्य बहिः गत्वा क्वचित् सरोवरतटे उपविश्य मालातः एकैकं रत्नं मणिं वा निष्कास्य दन्तैः भञ्जयित्वा तस्य अन्तः रामः अस्ति वा इति पश्यन् तत्र रामम् अदृष्ट्वा रत्नं मणिं च जले क्षिपति स्म । रामरहितेन तेन रत्नेन मणिना वा किं प्रयोजनम् इति रामभक्तस्य हनुमतः चिन्तनम् आसीत् । एवमेव किं वयमपि अस्माकं प्रत्येकस्मिन् कर्मणि संस्कृतमस्ति किम् इति द्रष्टुं शक्नुयाम ? मम भवतः च गन्तव्यं, भवितव्यं, मन्तव्यं, वक्तव्यं, द्रष्टव्यं, श्रोतव्यं च संस्कृतस्य भवेत्, संस्कृताय भवेत्, संस्कृतेन च भवेत् । मम भवतः च दैनन्दिनजीवनं, दिनस्य प्रत्येकमपि कार्यकलापः संस्कृतोपकारकः, संस्कृतसंवर्धकः, संस्कृतहितकारकश्च भवेत् । मदीयेन प्रत्येकं कार्येण संस्कृतस्य अपि कश्चन लाभः भवेत् । एतादृशी स्यात् मम भवतः च संस्कृतप्रधानता ।

संस्कृतप्रचारकार्यस्य यद् वलयम् अस्ति तस्य कार्यवलयस्य केन्द्रबिन्दुः भवति अस्मासु एकैकस्य संस्कृतप्रधानं जीवनं, संस्कृतकेन्द्रितं चिन्तनं, संस्कृताय समर्पितः व्यवहारः च । त्यागसिक्तं परिश्रमनिर्मितं च तद् जीवनं कार्यमण्डलस्य आकर्षणकेन्द्रम् । गजेन्द्रस्य शुण्डया अस्मज्जीवनकमलमेव स्वस्मै अर्पणीयमिति तस्य भगवतः एव इच्छा यदि अस्ति तर्हि अस्माकं ततोऽप्यधिकं सौभाग्यं किमन्यद् भवेत् ?

संस्कृतप्रचाराय प्रयत्नशीलस्य, कार्यप्रधानस्य, ध्येयनिष्ठस्य कार्यकर्तुः जीवने के क्लेशाः भवितुम् अर्हन्ति ? आर्थिकसङ्कटानि, शरीरपीडा, अस्माकं सदा कार्यव्यापृतिकारणतः गृहजनानां बहुविधाः क्लेशाः च इति त्रिविधाः क्लेशाः भवेयुः । एतादृश्याः जीवनयात्रायाः दुर्गमतां वयं जानीमः । परं मार्गस्य तानि कण्टकानि वयं सुमानि एव मन्यामहे । सुखे रतिः नाम कार्ये क्षतिः । अतः न सुखसम्पदाकाङ्क्षा अस्माकम् । प्रतिकूलतानां विपदां च वने वयम् अग्निशिखाः भूत्वा ज्वलेम, ज्वालयेम च । संस्कृतकार्यकर्तॄणां त्यागतपस्ययोः गाथाः आगामिन्यां शताब्द्यां बालानां स्वापनस्य प्रेङ्खागीतानि भवेयुः ।

बाधाभ्यः अस्माकं भयं नास्ति, बाधाभ्यः प्रेरणामेव प्राप्स्यामः । अस्माकं ध्येयमार्गः दुःखद्वन्द्वाभ्याम् आवृतः स्यात् । मार्गे झञ्झावातः स्यात्, महावृष्टिः वा स्यात् । पतिताः वृक्षाः, जलावृताः केदाराः, मृताः पशवः, मेघानां भीषणानि गर्जनानि इत्यादीनि सर्वाण्यपि महाकालस्य नर्तनमिव दृश्येरन् । तथापि वयम् अभीताः । यदि वयं ज्योतिष्पुञ्जाः एव स्मः, तर्हि कथं वा अमावास्यातः भयम् ?

वयं जीवनसङ्घर्षेषु एव वर्धामहे । अतः एव अस्माकं झञ्झावाते एव चिचलिषा, सतरङ्गसागरे एव तितीर्षा । कार्यकर्तॄणाम् अस्माकं हर्षे हासः नास्ति, दुःखे रोदनं नास्ति । पदवेगं वर्धयन्तः, अनन्यमनस्काः सन्तः, चलन्तः एव भवामः । लक्षसङ्ख्याकानि कष्टशतानि अपि सहामहै । जगतः घातप्रतिघातेषु अपि तनुं मनः जीवनं च संस्कृतसेवायामेव लीनं कुर्मः ।

सङ्घसंस्थापकस्य तस्य केशवबलिराम-हेडगेवारस्य राष्ट्रसमर्पितं जीवनं दृश्यताम् । तस्य शरीरमेव आसीत् किञ्चन यज्ञकुण्डम् । तस्य रक्तमेव अभवत् आज्यम् । किञ्च सः स्वीयां प्रतिभां, पौरुषं, मनः इत्यादीनि सर्वाणि अपि तस्मिन् राष्ट्रयज्ञे समिधः कृतवान् ।

स्वातन्त्र्यवीरस्य विनायकदामोदरसावरकरस्य जीवनतः अपि वयं प्रेरणां प्राप्तुं शक्नुमः । तदा सावरकरः अण्डमाने 'काला पानी' इति प्रसिद्धेन उग्रेण दण्डनेन आजीवनकारावासम् अनुभवति स्म, तस्य अग्रजः स्वातन्त्र्यान्दोलने आहुतः अभवत् । संयुक्तपरिवारस्य तस्य एकमात्रोपजीविकासम्पादयिता अनुजः बाळः अपि आन्दोलने भागी आसीत् इत्यतः आरक्षकैः बद्धः अभवत् । तदा गृहे बालानां शिशूनां महिलानां च भोजनादिक्लेशानां कारणतः विनायकसावरकरस्य प्रजावती विनायकाय पत्रं लिखित्वा 'एवं चेत् कथम् ?' इति पृष्टवती । तदा विनायकः कवितारूपेण मराठीभाषया तस्यै उत्तरं लिखितवान्, या च कविता अत्यन्तं प्रेरणादायिनी अस्ति । तस्याः कवितायाः गद्यरूपम् एवम् अस्ति -

''आसेतुहिमाचलम् अद्य समग्रः देशः जागरितः अस्ति । भिक्षुकवेषं क्षिप्त्वा वीराकृतिं धृत्वा उत्थितवान् अस्ति । वीरव्रतिनां गणाः एव प्रभुचरणयोः समर्प्यमाणाः सन्ति । यज्ञकुण्डस्य ज्वालाः प्रज्वलन्त्यः उद्गच्छन्त्यः च सन्ति ।

''हे दृढव्रतिनः ! तस्य यज्ञस्य पूर्णकरणस्य उग्रदीक्षादीक्षिताः ! भवतां परीक्षायाः कालः आगतः अस्ति । वदन्तु । विश्वे आसुरशक्तीः प्रहृत्य दैवसाम्राज्यस्य स्थापनाय एतासु महाज्वालासु कूर्दितुं सज्जाः के ?

''प्रभुः श्रीरामः यदा स्वभक्तेभ्यः आह्वानं कृतवान् तदा मातः ! अस्माकं कुलं प्रथमं सज्जम् अभवत् । प्रज्वलन्त्यां ज्वालायां प्रथमा आहुतिः अस्मादीया भवतु, सः दैवसम्मानः अस्मदीयः भवतु इति प्रार्थनाम् अकरोत् ।

''धर्मरक्षाणार्थं वयम् अस्माकं देहं पातयेम इति एतद् अस्माकं वचनम् । पश्यतु, इदानीं तद् सत्यं जातम् । तदनुसारं प्रोज्ज्वलज्ज्वालासु कूर्दितवन्तः स्मः । तानि अस्माकं प्रतिज्ञावचनानि बालिशानि न,

युवतीनां सम्मुखे उत्तानि अपि न । असह्ययातनानां मध्ये अपि अस्माकं धैर्यं न नष्टम् । निष्कामकर्मणः अस्माकं योगः न भग्नः ।

"कीदृशः आनन्दः एषः ! प्रियैः मित्रैः सह स्वीकृताः उग्राः पणाः सर्वे अद्य पूर्णाः । मातुः ध्वजस्य अधः युद्ध्वा तस्याः विमोचनायै वयं बलिः भवेम इति अस्माकं वचनं सत्यम् अभवत् । तस्याः निमित्तं सर्वं स्वार्थं ज्वालयित्वा भस्मीकरणस्य शक्तिं भगवान् अस्मभ्यं प्रदत्तवान् । वस्तुतः अस्मत्तः धन्यतराः के अन्ये सन्ति ?

"हे मातृभूमे ! भवत्यै अहं मम मनः अर्पितवान्, मम वक्तृत्वं, वाग्विभवं च समर्पितवान् । मम काव्यरसेन भवत्याः अभिषेकं कृतवान् । मम सर्वेषां लेखनानां भवती एव प्रेरणामूलम् ।

"भवत्याः बलिवेद्यां मम मित्रसङ्घं नुन्नवान् अस्मि । स्वयमपि अहं मम यौवनदेहभोगानाम् अग्निस्पर्शं कारितवान् अस्मि"। भवत्याः कार्यं नाम सर्वदेवदेवतानां प्रियं पवित्रं च कार्यम् । भवत्याः सेवा एव रघुवीरस्य सेवा ।

"भवत्याः बलिवेद्याः उपरि मम गृहं, वित्तं, स्वत्वम् इत्यादिकं सर्वमपि स्थापितवान् अस्मि । प्रजावतीं, पत्नीं, लघुशिशून् इत्यादीन् सर्वानपि अरण्याग्नौ प्रज्वालितवान् अस्मि । अतुलधैर्यस्य परमकरुणासिन्धुम् अग्रजं भवत्यै एव आहुतं कृतवान् अस्मि ।

"प्रियः अनुजः बाळः अपि भवत्यै एव अर्पितः । इदानीं मम देहस्य अर्पणस्य पर्यायः समागतः अस्ति । यदि मम सप्त सहोदराः अभविष्यन् तर्हि तान् सर्वान् अपि भवत्यै एव समार्पयिष्यम् ।

"भारतभूम्याः एते कोटिशः सन्तानाः मातृभक्त्या पूर्णाः सन्तः धन्याः अभवन् । तेषु अस्माकं वंशः तु ईश्वरवंशः एव । निर्वंशः भूत्वा अपि अखण्डवंशः भविष्यति सः अस्माकं वंशः ।

"वयम् अन्धाः इव एतद् व्रतम् आचरन्तः न स्मः । इतिहासस्य निसर्गस्य प्रकाशमयः साक्ष्यम् एतस्य अस्ति । दिव्यदाहकमिदमित्येव

पूर्णाहुतेः दीक्षाकङ्कणमिदं बद्धवन्तः स्मः ।''

उपरितनम् अस्ति सावरकरस्य 'वीरदीक्षा' इति प्रसिद्धं गीतम् । (तस्य भावानुवादः) संस्कृतभारत्याः कार्यकर्तारः वयं किञ्चन गीतं बहुधा गायामः, यस्य आरम्भपङ्क्तिद्वयम् एवमस्ति - 'संस्कृतस्य सेवनं, संस्कृताय जीवनम्, लोकहितसमृद्धये भवतु तनुसमर्पणम्' इति । किं तद् गीतम् अस्माकं जीवनगीतं भवितुम् अर्हति ?



# ६. श्रेष्ठाय कार्याय श्रेष्ठः समयः

संस्कृतं न केवलं काचित् भाषा, अपि तु किञ्चित् दर्शनम् इति वयं वदामः, विश्वसिमः च । अस्याः भाषायाः द्वारा एव भारतस्य चिन्तनं, विचाराः, अध्यात्मं, सभ्यता, संस्कृतिः, धर्मः, शास्त्राणि, विज्ञानं, कला, साहित्यं चेति सर्वमपि विकसितम् इति कारणतः संस्कृतवाङ्मयम्, अर्थात् संस्कृतं नाम भारतस्य जीवनदर्शनम् । तदेव भारतस्य आत्मा अपि । अतः एव तस्य आत्मभूतस्य, भारतस्य प्राणभूतस्य संस्कृतस्य कार्यं श्रेष्ठं कार्यम् । तथा तु राष्ट्रोत्थानाय लोककल्याणाय च क्रियमाणानि सर्वाणि अपि कार्याणि श्रेष्ठानि चेदपि संस्कृतोज्जीवनम् इत्येतद् भारतस्य प्राणवाहिन्याः संस्कृत्याः जीवनाधारस्य धर्मस्य च उज्जीवनस्य कार्यम् इति कारणात् संस्कृतकार्यं श्रेष्ठतरं कार्यम् । परम् अस्माकं संस्कृतानुरागत्वात् श्रद्धाधिक्यात् च वयं संस्कृतप्रचारकार्यं सर्वश्रेष्ठकार्यम् इत्येव मन्यामहे । कार्ये पूर्णमनोयोगाय तथा चिन्तनीयम् अपि । तदा एव आत्यन्तिकसमर्पणं शक्यं भवति । अतः संस्कृतप्रचारकार्यं सर्वश्रेष्ठं कार्यम् ।

समग्रे देशे भगवतः पूजा प्राधान्येन संस्कृतेन क्रियते । भगवतः स्तुतिः अपि संस्कृतेन एव । गृहे भवतु, मन्दिरे वा भवतु, सर्वः अपि भगवतः सकाशे प्रार्थनां करोति संस्कृतेन । अतः तस्य संस्कृतस्य शिक्षणकार्यमिदं भगवतः एव कार्यम् ।

अर्थः न अवगम्यते चेदपि जनाः सप्तशतीं, सुन्दरकाण्डं, भगवद्गीतां, भागवतं, शान्तिमन्त्रं, गायत्रीमन्त्रं, ललितासहस्रनाम-विष्णुसहस्रनामादिकं, यत्किमपि स्तोत्रं वा संस्कृतेन एव पठन्ति, वदन्ति च । तेन अपि, तावता अपि पुण्यप्राप्तिः भवति इति तेषां श्रद्धा । यदि ते अर्थम् अवगत्य पठेयुः, वदेयुः वा, तर्हि तेषां कियद्

पुण्यं स्यात् ! तर्हि तेषां पुण्यप्राप्तौ साहाय्यकरणम् इति हेतोः संस्कृतशिक्षणकार्यम् इदं पुण्यप्रदतरं कार्यम् । लोकानां संस्कृत-शिक्षणम् इत्येतद् जगतीतले एव पुण्यतमं कार्यम् ।

देशे बहवः जनाः, संस्थाः, संघटनानि, मठाः च बहुविधानि शिक्षणात्मकानि, जागरणात्मकानि, निर्माणात्मकानि च कार्याणि कुर्वन्तः एव सन्ति । केचन धर्मजागरणम्, अपरे भक्तिजागरणम्, अन्ये समाजसङ्घटनं, पुनरन्ये सेवाकार्याणि, इतरे अध्यात्मशिक्षणं च कुर्वन्ति । समाजजीवने तेषां सर्वेषामपि अत्यन्तं महत्त्वम् अस्ति । राष्ट्रविकासाय केचन शिक्षामार्गेण, केचन विज्ञानमार्गेण, केचन उद्योगमार्गेण, राजनीतिमार्गेण वा सर्वे प्रयत्नशीलाः सन्ति । परं देशे अपेक्षितः प्रकाशः न जातः । किमर्थम् ? तत्र कारणं तु एवम् अस्ति यत् सर्वः अपि दीपज्वालनस्य उद्देशेन यं कञ्चन पिञ्जं नुदन् अस्ति, परं तत्र प्रधानपिञ्जः (main switch) एव अनुन्नः अस्ति इति । तर्हि कथं वा दीपाः ज्वलेयुः ? सः प्रधानपिञ्जः एव संस्कृतम् । एतदस्ति अध्यात्मप्रपञ्चे, धार्मिकप्रपञ्चे, लौकिकप्रपञ्चे, शिक्षाप्रपञ्चे, राष्ट्र-प्रपञ्चे च एतस्य संस्कृतकार्यस्य महत्त्वं, श्रेष्ठत्वं, मुख्यत्वं वा ।

अस्माकं राष्ट्रजीवनस्य अवनतेः इतिहासस्य समाप्तिं कृत्वा उत्कर्षस्य नवेतिहासनिर्माणस्य कार्यं वयं संस्कृतमाध्यमेन स्वीकृतवन्तः स्मः । भारतस्य नवनिर्माणे संस्कृतस्य एव महत्तमा भूमिका भविष्यति इति सर्वे जेष्ठाः प्राज्ञाः त्रिकालविदश्च वदन्तः सन्ति । अतः संस्कृतकार्यम् इदम् किञ्चन ऐतिहासिकं कार्यम् ।

महत् कार्यं साधयितुं महद् एव मूल्यं दातव्यं भवति खलु ? तद् मूल्यं किम् ? कथम् ?

अस्माकं संस्कृतभारतीकार्यस्य आधारभूताः कार्यकर्तारः स्थानीयाः कार्यकर्तारः एव । उपायचिन्तकाः, संयोजकाः, नीति-निर्धारकाः, निर्णयस्वीकर्तारः, क्रियान्वयनकर्तारः, धर्तारः च ते

एव। परन्तु कार्यस्य व्याप्तिं विस्तारयितुं गतिं वर्धयितुं च गृहस्थानपदवृत्त्यादिभिः अन्यबन्धनैः रहिताः ध्येयबन्धनयुक्ताः समाजनिकेतनाः केचन अपेक्षिताः भवन्ति। ते एव कथ्यन्ते विस्तारकाः इति ।

युवा कश्चन (काचन वा) स्वस्य जीवनस्य कञ्चित् भागं - द्वित्राणि वर्षाणि (सम्पूर्णं जीवनं वा) - समाजाय, राष्ट्राय, संस्कृताय च समर्प्य, स्वस्य सम्पूर्णं समयम् - दिनस्य २४ घण्टाः अपि - संस्कृताय यच्छन् अवैतनिकरूपेण, सेवाभावनया संस्कृतप्रचारकार्याणि यः संस्कृतभारत्याः योजनानुगुणं करोति तं (तां वा) वयं विस्तारकः इति (विस्तारिका इति वा) वदामः । द्वित्राणां वर्षाणां तादृशसेवायाः अनन्तरम् इतोऽपि दीर्घकालं यः समयसमर्पणं करोति तं पूर्ण-कालिककार्यकर्ता इति वदामः । तथा तु भावेन विस्तारकः अपि पूर्णाकालिककार्यकर्ता एव। परन्तु द्वित्राणां वर्षाणां जीवनसमयदाता विस्तारकः, विस्तारकजीवनं समाप्य जीवने दीर्घकालं यावत् तादृशं समर्पणजीवनं यः कर्तुम् इच्छति सः पूर्णकालिकः इति द्विधा अस्माभिः व्यवस्थासौकर्याय भेदः कल्पितः ।

स्वामी विवेकानन्दः कञ्चित् विषयम् उक्तवान् आसीत् - 'उद्यानेषु वनेषु केदारेषु च प्रतिदिनं प्रातः कोटिशः पुष्पाणि विकसन्ति, सायङ्काले तदनन्तरदिने वा म्लानानि भूत्वा पतन्ति च। तेषां पुष्पाणाम् एतस्मिन् जगति किमपि महत्त्वं न भवति । परन्तु तेषु पुष्पेषु यानि पुष्पाणि भगवतः पूजायां समर्पितानि भवन्ति तेषां पुष्पाणां जन्म सार्थकम्। तथैव मानवेषु अस्मासु यस्य जीवनपुष्पं राष्ट्रदेवस्य पूजायै, जनताजनार्दनस्य, दरिद्रनारायणस्य च सेवायै अर्पितं भवति तस्यैव जन्म सार्थकम्' इति । सुरसरस्वत्याः सहस्रपुष्पार्चनं कुर्मः किम् ?

सः एव विवेकानन्दः उक्तवान् यत् - 'वेदान्तस्य साधना तदा एव करणीया यदा भवतः शरीरे इतोऽपि शक्तिः अस्ति, यौवनस्य

चैतन्यम् अस्ति, न तु वार्धक्ये यदा शरीरं जीर्णं दुर्बलं च भवति' इति। स्वार्थचिन्तनं विना. दिनस्य २४ घण्टाः संस्कृतहितं, संस्कृतविकासम् एव चिन्तयन्तः विस्तारकाः संस्कृतभक्त्या संस्कृते न्यस्तचित्ताः सन्तः संस्कृतकार्यं कुर्युः इति या अपेक्षा अस्ति सा, तादृशी जीवनशैली साधनामयी एव। कार्यक्षेत्रे लक्ष्यसाधनाय स्वस्य इन्द्रियाणां निग्रहः, मनसि ईश्वररूपिध्येयप्रणिधानं च एतद् अध्यात्मसाधनकल्पम्।

अस्माभिः लक्षशः सम्भाषणशिबिराणि करणीयानि, लक्षशः व्याकरणशिक्षणशिबिराणि करणीयानि, लक्षशः संख्यया नूतन-पुस्तकानां प्रकाशनं करणीयं, लक्षशः संस्कृतशिक्षकाः प्रशिक्षणीयाः, लक्षशः ग्रामाः गन्तव्याः, लक्षशः गृहाणि सम्पर्कणीयानि, कोटिशः हृदयानि आन्दोलनीयानि, किञ्च एतत् सर्वम् अग्रिमे दशके, दशकद्वये वा करणीयं, यतः सः कालः संस्कृतदृष्ट्या राष्ट्रदृष्ट्या च अत्यन्तं निर्णायकः । तस्मात् तदर्थं सहस्त्रशः विस्तारकाः अपेक्षिताः। मातुः सरस्वत्याः सहस्त्रपुष्पार्चनार्थं तादृशाः विस्तारकाः भवेयुः ये भीष्मप्रतिज्ञाः भीमपराक्रमाः च स्युः, ये कार्यक्षेत्रे युधिष्ठिरः इव स्थिराः स्युः, समयदाने कर्णाः, कार्यसाधनचातुर्ये श्रीकृष्णाः च स्युः ।

सर्वः अपि संस्कृतच्छात्रः संस्कृतानुरागी अन्यविषयच्छात्रः वा, स्वस्य अध्ययनानन्तरं द्वित्राणि वर्षाणि संस्कृतभारत्याः विस्तारकरूपेण कार्यं कुर्यात्। विस्तारकत्वं काचित् वृत्तिः न, अपि तु किञ्चन व्रतम् । सेवायाः व्रतम्। अतः सः सेवाव्रती । विस्तारकरूपेण कार्यकरणेन स्वस्य अपि विकासः, संस्कृतस्य अपि प्रचारः इति लाभद्वयम्। स्वस्य विकासः बहुमुखः महान् च भवति - भाषादृष्ट्या, ज्ञानदृष्ट्या, व्यवहारदृष्ट्या, भाषण-लेखन-सार्वजनिकसम्पर्क-प्रबन्धनादिकौशलदृष्ट्या, आत्मविश्वास-धैर्य-

कार्ययोजनाकरण-कार्यसम्पादनादीनां बहूनां गुणानां दृष्ट्या च इति। विस्तारकरूपेण कार्यकरणात् पूर्वतने जने, कार्यानन्तरकालीने जने च महान् भेदः, महती प्रगतिः च अनुभूयते इति अस्माकम् अनुभवः। वस्तुतः विस्तारकरूपेण कार्यकरणम् इत्येतद् विद्याभ्यासस्य एव भागः इति धारणा भवेत्।

विस्तारकस्य पूर्णकालिककार्यकर्तुः वा वेतनं न भवति। परं सः समाजाय संस्कृताय च आत्मानं समर्पितवान् इति कारणतः तस्य भोजन-आवासप्रवासादिव्यवस्थाः समाजः करोति, अर्थात् संस्कृतभारती करोति। सः तादृशसमर्पणमनोभाववान् भवेत् यत् सः संस्कृतभारती यत्र वदति तत्र गत्वा, यद् कार्यं सूचयति तद् कार्यं कुर्यात्। विस्तारकाणां, यावत्कालं सः विस्तारकः तावत्कालं यावत्, संस्कृतभारत्याः उत्तरदायित्वं विना अन्यत् किमपि उत्तरदायित्वं न भवति, न वा किमपि, कीदृशमपि, कस्यापि प्रकारस्य धनार्जनपरकार्यम्। न पदाकांक्षा, न वा कीर्त्याकांक्षा। एतादृश-रूपेण जीवनं कुर्वन्तः गते दशकद्वये पञ्चशताधिकाः जनाः जीवनस्य अत्यन्तसुन्दरस्वप्नानां कालं तारुण्यं समर्प्य विस्तारकाः सन्तः संस्कृतसेवां राष्ट्रसेवां च कृतवन्तः आसन्। तादृशेन समर्पणजीवनेन ते विस्तारकाणां पूर्णकालिकानां च व्यवस्थायाः महिमानम्, आदरं, प्रतिष्ठां च समाजमानसे वर्धितवन्तः। अद्यापि संस्कृतभारत्याः सार्धैकशताधिकाः तादृशाः विस्तारकाः पूर्णकालिकाः च कार्यरताः सन्ति, मौनतपस्यां कुर्वन्तः सन्ति, दीपवर्तिकाः इव आत्मानं ज्वालयन्तः सन्ति। तेषु पुरुषाः महिलाः च सन्ति।

युवसु ये विद्याभ्यासं समापितवन्तः ते, अपि च ये इदानीम् अन्तिमवर्षे पठन्तः सन्ति ते, एवं सर्वे चिन्तनशीलाः स्पन्दनशीलाः च संस्कृतप्रेमियुवानः चिन्तयेयुः यत् अग्रिमे शैक्षिकवर्षे स्वेन विस्तारकेण भवितव्यम् इति। ते इदानीमेव तदर्थं सङ्कल्पं कृत्वा

सज्जतायाः प्रारम्भं कुर्युः च । का सज्जता ? संस्कृतेन सम्भाषणसामर्थ्यं सम्पादनीयं, प्रशिक्षणशिबिरं गन्तव्यं, द्वित्राणि सम्भाषणशिबिराणि चालनीयानि, 'संस्कृतभारती', 'परिवर्तनम्', 'सङ्क्रमणम्' इत्यादीनि द्वित्राणि पुस्तकानि पुनः पुनः पठनीयानि च इति । विस्तारकेण भवितुं प्रथमं तेन संस्कृतभारत्याः कार्यपरिचयः सम्पादनीयः । तदर्थं सज्जता एषा न्यूनतमा आवश्यकता । ये आगामिनि शैक्षिकवर्षे विस्तारकाः भवितुम् इच्छन्ति ते संस्कृतभारत्याः राज्यप्रमुखस्य सम्पर्कं कुर्युः अथवा मह्यं पत्रं लिखेयुः, स्वस्य पूर्णविवरणेन सहितम् ।

द्वित्राणि वर्षाणि यावत् विस्तारकरूपेण कार्यं कृत्वा पश्चात् सः इच्छति चेत् इतोऽपि दीर्घकालम् अथवा आजीवनं पूर्णकालिकरूपेण संस्कृतप्रचारकार्यं कर्तुं शक्नोति । महिलया कयाचित् विस्तारिकया भवितव्यं चेत्, वर्तमानकालस्य हिन्दुसमाजस्य चिन्तनरीतिं परिस्थितिं च मनसि निधाय, अपि च महिलानां शरीरप्रकृतिं मनसि निधाय च, उपरि उक्तायाः सज्जतायाः अतिरिक्ततया अन्ये त्रयः अंशाः परिगणनीयाः भवन्ति । ते च - १) मातापित्रोः अनुमतिः २) तस्याः योगक्षेमव्यवस्थां कर्तुं संस्कृतभारत्याः तस्य राज्यस्य कार्यकर्तॄणां सौकर्यम् ३) तस्याः वयसः पञ्चविंशतितमवर्षात् पूर्वं निवृत्तया भूत्वा पश्चात् तया गृहिण्या भवितव्यम् इति ।

केचन विस्तारकाः भवितुम् इच्छन्ति । परं तेषां मनसि विभिन्नाः प्रश्नाः भवन्ति । 'अहं ज्येष्ठः पुत्रः अस्मि', 'मया मम भगिनीनां विवाहः करणीयः अस्ति', 'पिता सेवानिवृत्तः जायमानः अस्ति', 'माता रुग्णा' - इत्यादिरूपेण बहुविधाः क्लेशाः इति । एतत् सर्वमपि सत्यमेव । परं चिन्त्यताम् किं समस्यारहितः, कष्टरहितः, गृहकर्तव्यरहितः एतस्मिन् जगति कोऽपि भवति ? नैव, नैव, नैव । सर्वः अपि स्वस्य समस्यामेव यदि चिन्तयति तर्हि संस्कृतस्य धर्मस्य

राष्ट्रस्य च समस्यां कः चिन्तयिष्यति ? यदि कष्टानि एव न सन्ति, सुखमेव सुखमिति यत्र, तादृशपरिस्थितौ कार्यं करणीयं तर्हि त्यागः इति शब्दस्य कः अर्थः ? उपरितनसमस्यानाम् उपेक्षां करोतु इति अहं न वदन् अस्मि । परन्तु अस्माभिः स्वस्य सामाजिक-राष्ट्रिय-दैविक-कर्तव्यमपि करणीयं, कश्चन मध्यमार्गः अनुसर्तव्यः इति तावदेव । अतः उपजीविका-वृत्ति-व्यवसायादिप्रवेशात् पूर्वं द्वित्राणि वर्षाणि पूर्णसमयं दत्त्वा विस्तारकैः सद्भिः संस्कृतसमस्या अपि चिन्तनीया । सकृत् वृत्तिप्रवेशः कृतः चेत् अनन्तरम् आजीवनं गृहकर्तव्यानि आश्रमधर्माः च पालयिष्यन्ते एव खलु ।

अन्ये केचन वदन्ति यत् वृत्तिं कुर्वन्तः प्रतिदिनं संस्कृतकार्यं कुर्याम एव खलु ? इति । तत्तु सत्यमेव, श्रेष्ठमपि च । परन्तु तदा वृत्तिबन्धनकारणात् प्रवासस्य काचित् सीमा भवति । सहस्रशः संस्कृतकार्याणि साधयितुं, सङ्घटनं निर्मातुं, नूतनेषु नूतनेषु च स्थानेषु कार्यारम्भं कर्तुं, कार्यं वर्धयितुं च निर्बाधरूपेण प्रवासकर्तारः अपि अपेक्षिताः भवन्ति । तादृशाः कार्यकर्तारः कार्यस्य वेगवर्धकाः (catalysts) भवन्ति ।

अतः वृत्तिप्रवेशात् पूर्वं द्वित्राणि वर्षाणि यावत् विस्तारकाः भवेम इति । एतस्य लेखस्य वाचकेषु ये ज्येष्ठाः सन्ति, शिक्षकाः आचार्याः प्राध्यापकाः प्राचार्याः च सन्ति, ये पितरः मातरः च सन्ति, मध्यवयस्काः, प्रौढाः, वृत्तिनिरताः च सन्ति तेषु सर्वेषु मम निवेदनं यत् स्वस्य शिष्याः, पुत्राः, पुत्र्यः, परिचिताः, (महाविद्यालये वाणिज्यविज्ञानवृत्तिपरविषयाणाम् अध्येतारः अपि) ये केऽपि युवानः संस्कृतानुरागिणः सन्ति तान् सर्वान् 'विस्तारकाः भवन्तु' इति अनुरोधपूर्वकं प्रेरयन्तु, संस्कृतमात्रे उत्तमान् सेवकान् ददतु च इति । भवतः प्रेरणया, न जाने, तेषु भवत्प्रेरितेषु कश्चित् कदाचित् किमपि महत् सामाजिकक्रान्तिं साधयेद् अपि । कस्यचित् व्यक्तिविशेषस्य

हृदये ध्येयदीपज्वालने भवता निमित्तेन भवितव्यं, तेन च भवत्कारणतः संस्कृतक्षेत्रे काचित् महती क्रान्तिः भवेत् इति तस्याः जगज्जनन्याः भगवत्याः एव सङ्कल्पः स्यादपि ! अतः वयं सर्वदा सर्वान् अपि सत्कार्याय अर्थात् 'विस्तारकः भवतु' इति प्रेरयेम ।

पुनरपि विवेकानन्दः जायेत इति तु इच्छन्ति, परम् अहमेव सः भवेयम् इति, अहं प्रयत्नं कुर्याम् इति वा किमर्थं न चिन्तयन्ति ? शिवाजी भवेत्, सुभाषचन्द्रबोसः भवेत्, परं मम गृहे न, पार्श्वगृहे भवतु इति किमर्थं चिन्त्यते ?

क्रैस्तमतप्रचाराय कश्चन 'फादर्' भवति चेत्, काचित् 'सिस्टर्' भवति चेत् तत्समाजे गृहजनाः गर्वम् अनुभवन्ति, सन्तोषेण, आशीर्वादैः च सह तस्य आप्रच्छनकार्यक्रमं कुर्वन्ति । तथा एव संस्कृतप्रचाराय कश्चन प्रतिष्ठते चेत् सः प्रोत्साहनीयः ।

भारते यः कोऽपि मोक्षप्राप्तेः इच्छया संन्यासी भवति चेत् तं कोऽपि न अवरुणद्धि । तद् असमीचीनं कार्यम् इति न मन्यते । तथैव कश्चन स्वार्थं न्यूनीकुर्वन् देशाय, धर्माय, संस्कृताय च स्वस्य जीवनस्य ७५ वर्षात्मके आयुषि न्यूनातिन्यूनं त्रीणि वर्षाणि वर्षद्वयं वा (अन्यानि ७२-७३ वर्षाणि तदीयसुखभोगाय एव ।) समर्पयति चेत् तद् अत्यन्तं प्रशस्तं कार्यम् । यदि स्वस्य मोक्षाय गृहत्यागः, पत्नीपुत्र-त्यागः, संन्यासग्रहणं वा भारते पापाय न, तर्हि देशाय, धर्माय, संस्कृताय अर्थात् परार्थाय (न तु स्वार्थाय) दैवीयकार्याय च वर्षत्रयं यावत् गृहजनानां क्लेशाः भवन्ति चेत् तद् न पापाय, अपि तु पुण्याय एव । *'त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥'* इति प्राचीनोक्तिः । वयं तु कुलत्यागं पृथिवीत्यागं वा वदन्तः न स्मः । महतः ध्येयस्य साधनाय स्वल्पस्य स्वार्थस्य समर्पणं करणीयं भवति इति लोकनियमः ।

अस्माकं पूर्वजाः केवलस्य मोक्षस्य चर्चां न कृतवन्तः । 'आत्मनो

मोक्षाय, जगद्धिताय च' इति जगतः हितम् अपि महत्तरः धर्मः इति जीवनलक्ष्यत्वेन तस्य उपस्थापनं कृतवन्तः । अष्टादशपुराणानां, स्मृतीनाम्, इतिहासस्य च सारांशरूपेण अन्ते महर्षिणा व्यासेन उक्तं किम् ? 'परोपकारः पुण्याय' इति परोपकारकार्यम् एकमेव पुण्यकरम् इति । समष्टिहिते एव व्यष्टिहितम् अपि निहितम् इति कारणात् समष्टिहितमेव प्रधानतया चिन्तनीयम् । वयम् एतदपि पश्यामः यत् केषुचित् परिवारेषु तादृशः कोऽपि कापि वा भवति यः / या भ्रातृणां भगिनीनां च निमित्तं स्वस्य सुखानि सर्वाणि प्रज्वाल्य परिवारसुखाय अहर्निशम् आजीवनं परिश्रमं करोति । यत्र प्रीतिः तत्र महान्तमपि त्यागं कर्तुं, महदपि कष्टं सोढुं च जनाः सिद्धाः । प्रीतिं विहाय तत्र अन्या प्रेरणा का ? एका एव, इतरेभ्यः क्रियमाणैः उपकारैः यः आनन्दः या तृप्तिः वा स्वेन लभ्यते सा एव । इत्थं देशाय, धर्माय, संस्कृताय च समर्पणभावेन कार्यकरणेन लभ्यमानः आनन्दः, समयस्य जीवनस्य वा सार्थकतायाः अनुभूतिः, संस्कृतमातुः कष्टकाले तस्याः सेवाकरणस्य भाग्यं प्राप्तम् इति एते अंशाः अस्मभ्यम् अपारां शक्तिं यच्छन्ति ।

विस्तारकरूपेण कार्यकरणाय तस्मै संस्कृतभारती न केवलं संस्कृतस्य गभीरं प्रशिक्षणं ददाति, अपि तु व्यक्तिविकासस्य बहुषु विषयेषु प्रशिक्षणं ददाति । वस्तुतः विस्तारकरूपेण कार्यकरणम् इत्येतदेकं जीवनप्रशिक्षणम् । एतेन प्रशिक्षणेन, एतेन अनुभवेन च कश्चन स्वस्य जीवनप्रतिमायाः शिल्पी स्वयम् एव भवितुं शक्नोति । एकः विचारः, एकः स्वप्नः, एकः आदर्शः च यथा स्यात् तथा जीवनाय विस्तारकस्य प्रयत्नः भवेत् । अग्रे गत्वा एकं जीवनम्, एकं लक्ष्यम्, एकं कार्यम् इति भावः, संस्कृतप्रचारकार्यमिदं पूर्णकालिकस्य मम जीवनध्येयव्रतम् (life mission) इति भावः च यथा स्यात् तथा विस्तारकस्य प्रयत्नः भवेत् ।

उपजीविकाकेन्द्रितायाः अद्यतनशिक्षाव्यवस्थायाः कारणतः बहूनां यूनां चिन्तनं भवति यत् मया आदौ वृत्तिः अन्वेष्टव्या, पश्चात् समाजकार्यं सेवाकार्यं च चिन्तयिष्यामि, यतः अनन्तरं किं भवेदिति कः जानाति इति। एवं भविष्यद्विषयकस्य भयस्य कारणेन विद्यमानायां 'प्रथमं वृत्तिः' इति मानसिकतायां विस्तारकत्वस्य स्थानं न्यूनं भवति । वस्तुतः तादृशभयस्य कारणम् एव नास्ति । विस्तारकरूपेण प्रचारकार्यकरणस्य कारणेन क्रमशः समाजे जागर्तिः, छात्रसंख्यावृद्धिः, तेन च वृत्त्यवसराणां वृद्धिः च भविष्यति। विस्तारकरूपेण कार्यकरणेन तस्य कार्यकर्तुः भाषादृष्ट्या पाठनकौशलदृष्ट्या च योग्यता अपि वर्धिष्यते, अपि च बहूनां महतां जनानां संस्थानां च परिचयः अपि भविष्यति इति एतैः कारणैः वृत्तिप्राप्तिसम्भावना अपि वर्धिष्यते । एवं विस्तारकरूपेण कार्यकरणानन्तरं वृत्त्यवसराः अधिकाः एव ।

यदि केचन प्रतिभावन्तः, शास्त्रज्ञाः, मेधाविनः, वैयाकरणाः, सुष्ठु अधीतवन्तः च संस्कृताय समयदानं करिष्यन्ति, विस्तारकाः भविष्यन्ति तर्हि ते चमत्कारान् एव साधयितुं शक्नुयुः । यथा कश्चन वैयाकरणः, यः सिद्धान्तकौमुदीम् अष्टाध्यायीं वा सुष्ठु अधीतवान्, विस्तारकः जातः चेत् तस्य द्वारा एकवर्षकालावधौ एकस्मिन् राज्ये, प्रत्येकस्मिन् जनपदे कौमुदीशिबिरं, व्याकरणशिबिरं, कारक-शिबिरं, समासशिबिरम् इत्यादिषु एकैकं शिबिरं कृत्वा व्याकरण-शिक्षणाभियानं कर्तुं शक्नुयाम । तेन समग्रे राज्ये छात्राणां, कार्यकर्तॄणां, शिक्षकाणां च संस्कृतज्ञानस्तरस्यैव उत्थानं भवेत् । एवमेव यदि शास्त्रज्ञाः युवानः विस्तारकाः भविष्यन्ति तर्हि न्यायशिबिरं, वेदान्तशिबिरं, काव्यशिबिरम् इत्यादीनि बहुविधानि शिबिराणि कर्तुं शक्नुयाम ।

वयं संस्कृतक्षेत्रस्य समस्याकथयितारः एव न भवेम, अपि तु

परिहारदातारः अपि भवेम । यदि अहं समापिताध्ययनः तर्हि कञ्चित् कालं विस्तारकः भवेयम् । यदि अहम् एतावता वृत्तिं प्रविष्टवानेव अस्मि, गृहस्थः जातः एव अस्मि, तर्हि अन्यान् दश युवकान् (युवतीः वा) विस्तारकत्वाय प्रेरयेयम् । अस्माकं सर्वेषां प्रयत्नेन यदि सहस्रं विस्तारकाः द्वित्राणि वर्षाणि कार्यं करिष्यन्ति तर्हि निश्चयेन देशे संस्कृतगङ्गायाः महापूरः एव प्रवहेत् ।

संस्कृतस्य बी.ए.-एम्.ए.-शास्त्रि-आचार्यादिषु कक्ष्यासु अधीयानाः छात्राः देशे आहत्य लक्षाधिकाः सन्ति । पुनश्च लक्षाधिकाः अन्यविषयच्छात्राः अपि अस्माकं सम्भाषणशिबिरादिषु आयान्ति । यदि एतेभ्यः सर्वेभ्यः वयं 'जीवने किञ्चित् महत् साधनीयं, किञ्चित् दिव्यं भव्यं च कार्यं करणीयं, राष्ट्रसेवा, समाजसेवा, संस्कृतसेवा च करणीया, आजीवनं केवलं स्वस्मै न जीवनीयम्, इतरेभ्यः अपि जीवनीयं, तदेव सार्थकं जीवनम् इत्येवंप्रकारेण जीवनदृष्टिं दद्याम तर्हि बहवः ध्येयचिन्तनं कुर्युः । अद्यतनशिक्षाव्यवस्थायां केवला स्वार्थदृष्टिः दीयते, केवलं वृत्त्युपजीविकाधनार्जनदृष्टिः दीयमाना अस्ति, वयं कर्तव्यदृष्टिं धर्मदृष्टिं च दद्याम । यदि संस्कृतप्राध्यापकः स्वस्य छात्रान् प्रेम्णा - ''रे वर्षद्वयं संस्कृतप्रचाराय विस्तारकरूपेण गच्छतु'' इति वदति तर्हि निश्चयेन ते करिष्यन्ति । यदि कश्चन युवा स्वमित्राणि स्नेहेन– ''आगच्छन्तु रे, मिलित्वा कार्यं कुर्मः'' इति वदति तर्हि एकेन सह अन्येऽपि विस्तारकाः आगच्छेयुः । एवंप्रकारेण वातावरण-निर्माणं कुर्मः चेत् यथा पूर्वं स्वतन्त्रतान्दोलने युवानः प्रधावन्ति स्म तथा अद्य संस्कृतप्रचाराय विस्तारकाणां सैन्यमेव अष्टसु दिक्षु प्रधावेत् । तेषु विस्तारकेषु एव केचन भाविनि काले संस्कृतस्य तारकाः भवेयुः अपि !

संस्कृतभाषायाः प्रचारेण राष्ट्रसेवायाः संस्कृतकार्यमिदं श्रेष्ठं कार्यम् । व्यक्तेः जीवने यौवनकालः एव श्रेष्ठः समयः । श्रेष्ठाय

कार्याय श्रेष्ठः समयः एव दातव्यः ।

अन्ते वयम् एतत् चिन्तयामः यत् भगवान् किमर्थम् अस्मभ्यं संस्कृतां दृष्टिं दत्तवान् ? वयं किमर्थं संस्कृतज्ञाः अभवाम ? किमर्थं वयम् अस्य लेखस्य वाचकाः अभवाम ? इति । एषः कश्चन सामान्यः संयोगः इति मा चिन्तयतु । अन्वेषणे कृते भवद्भिः निमित्तं ज्ञायेत !



# ७. संस्कृतमातृभाषिपरम्परा

वृक्षस्य शक्तिः का इति पृष्टे सति तत्र शक्तिद्वयं कथ्यते - वृक्षस्य यद् मुख्यं काण्डम् अस्ति तस्य आन्तरिकसत्त्वं दार्ढ्यं च, तथा च मूलानि भूम्यां कियद् अधिकं गभीरं गतानि इति । एतद्द्वयं यावत् अधिकं भवति तावता प्रमाणेन वृक्षस्य शक्तिः अधिका इति वक्तुं शक्यते । संस्कृतभाषा कश्चन वृक्षः इति चिन्त्यते चेत् तत्र ते द्वे शक्ती के भवतः ? काण्डस्य आन्तरिकसत्त्वदार्ढ्यभूता शक्तिः भवति संस्कृतज्ञानां (अधीतसंस्कृतानाम् अधीयमानसंस्कृतानां वा) व्याकरणादिशास्त्रज्ञानम् । गभीरङ्गतानि मूलानि इव विद्यमाना शक्तिः भवति मातृभाषारूपेण भाषा, शिक्षणमाध्यमरूपेण भाषा, लोकव्यवहाररूपेण भाषा च । मूलेषु अपि एकं मूलं मुख्यभूतं भवति, यस्य नाम कासुचित् प्रादेशिकभाषासु मातृमूलम् इति कथ्यते, तद् मूलं वृक्षस्य वास्तविकः आधारः भवति । मातृभाषा, शिक्षणादीनां माध्यमभाषा, लोकव्यवहारभाषा, प्राशासनिकभाषा, सम्पर्कभाषा इत्यादयः भाषाः विविधानि मूलानि चेत् तासु मातृभाषात्वमेव मातृमूलतुल्यम् । कस्याश्चिदपि भाषायाः स्थायी आधारः भवति मातृभाषिपरम्परा । मूले छिन्ने वृक्षः कथं जीवेत् ?

'संस्कृतं मातृभाषाणां माता इत्यतः सा मातृभाषा एव' इत्यादिरूपेण कदाचित् वयं कथयामः । किन्तु अभिमानवशात् संस्कृतम् अस्माकं मातृभाषा इति कथनेन सा मातृभाषा न भवति । सः केवलः वादः भवति । तथा तु २००१तमस्य क्रिस्ताब्दस्य भारतीयजनगणनायाः अनुसारं भारते ४९,७३६ जनाः संस्कृतमातृभाषिणः सन्ति, ये च भारतस्य समग्रायाः जनसंख्यायाः ०.००६ % भवन्ति । जनगणनावसरे राज्ये राज्ये (विशेषतया उत्तरप्रेदेशे - २४,०००जनाः) स्थाने स्थाने अस्माभिः तथा

लेखितं, तादृशलेखनाय आग्रहः कृतः, देशे सर्वत्र अभियानं कृतं, तस्मात् तावन्तः जनाः संस्कृतं मातृभाषा इति उद्घोषितवन्तः, तेन च भविष्यत्काले संविधानात्मकचर्चावसरे संस्कृतहितरक्षणमपि भवेत् । एतद् अस्माकं 'Strategic Positioning' इति तावदेव । वास्तविकरूपेण मातृभाषा नाम का ?

जन्मनः अनन्तरं शिशोः जगतः परिचयः यया भाषया भवति, माता यया भाषया शिशोः लालनपोषणे करोति, यया भाषया शिशुः क्रीडति रोदिति च, सा भाषा तस्य शिशोः मातृभाषा इति कथ्यते । (सा इतरेषां 'मातृभाषा' इति न भवति) तादृशे अर्थे पूर्वं संस्कृतं सार्वत्रिकरूपेण आसेतुहिमाचलं मातृभाषा आसीत् । प्रायः केभ्यश्चित् शतात् वर्षेभ्यः पूर्वमपि संस्कृतं लक्षशः जनानां मातृभाषा आसीत् । कुलपरम्परामाध्यमेन संस्कृतभाषाम् उत्तरोत्तरसन्ततिः अधिगच्छति स्म । एवं परम्परया मातृभाषारूपेण संस्कृतभाषागङ्गा अव्याहता आदेशं प्रवहति स्म । परं प्रायः अतीते सहस्रवर्षावधिके काले बाह्याक्रमणानां कारणतः, सामाजिकविकृतीनां कारणतः च सा संस्कृतमातृभाषिपरम्परा क्षीणतां गता । ब्रिटिश्भारते तु लुप्तप्राया एव जाता । तथापि स्वतन्त्रे भारते काशी-लखनऊ-कठमण्डु-सागर-(शिवमोग्ग)-मत्तूरु-बेङ्गलूरु-कल्लड्क-तिरुवनन्तपुर-कोव्वूरु-भाग्यनगरादिषु बहुषु स्थानेषु संस्कृतमातृभाषि-परम्परायाः उज्जीवनाय केचन प्रयत्नम् आरब्धवन्तः । इतिहासस्य नूतनम् अध्यायम् उद्घाटितवन्तः च ।

विश्वे पञ्चभिः कारणैः कस्याश्चिदपि भाषायाः जीवनं, वर्धनं, मरणं च निश्चितं भवति । तानि च–

१. मातृभाषित्वम्

२. धर्मसंस्कृत्योः वाहकत्वम्

३. राजाश्रयः

४. जगतः परिवर्तनानां पचनसामर्थ्यं - स्वस्मिन् adaptability

५. आर्थिककारणं च इति ।

एतेषु पञ्चसु अपि मूलभूतः आधारः, प्राथमिकी आवश्यकता, वास्तविकी शक्तिः, शक्तिमूलं वा भवति तस्याः भाषायाः मातृभाषिजनाः कति सन्ति, तेषां संख्या कियती इति ।

संस्कृतसम्भाषणान्दोलनस्य कारणतः अद्य लक्षशः जनाः संस्कृतेन सम्भाषणं कुर्वन्ति, अतः पुनरपि संस्कृतं 'भाषा'पदस्य अन्वर्थकत्वं प्राप्नुवत् अस्ति । किञ्च सामान्येन अर्थेन संस्कृतम् अद्य कर्मकाण्डभाषा, ग्रन्थालयभाषा, शास्त्रभाषा, वाङ्मयभाषा च (काव्यभाषा वा) अस्ति एव । परं संस्कृतभाषायाः सार्थकरूपेण किञ्च महता प्रमाणेन मातृभाषारूपेण विकासाय अद्य सहस्त्रशः संस्कृतमातृभाषिशिशवः अपेक्षिताः ।

संस्कृतं यदा बहुसंख्यया मातृभाषा भविष्यति तदा एव सा भाषा सन्तानपरम्परया सह सम्बद्धा सती स्थिरा, शाश्वती, अमरा, अविच्छेद्या च भविष्यति। युगानुवर्तिनी भविष्यति । कालोचित-शब्दप्रयोगदात्री भविष्यति। चैतन्यमयी प्राणमयी सा विनूतनज्ञानगर्भा भविष्यति । असंख्यसम्भावनानाम् आविष्कर्त्री भविष्यति । नित्य-वर्धिष्णुः, बहुमुखविकासोन्मुखी, नवाविष्कारदर्शिनी सती पल्लविष्यति, पुष्पिष्यति, असंख्यफलानि फलिष्यति च ।

यदा भगवान् प्राणिषु मानवान् भाषया पृथक् कृतवान्, भाषया एव जगतः परिचयं कारयति, भाषया चिन्तनसामर्थ्यं दत्तवान् अस्ति तर्हि किमर्थं तस्य भगवतः सृष्टेः वैशिष्ट्यस्य अनुभवं वयं भगवद्भाषया एव न कारयामः ?

पठनं पाठनं वा विना, सहजतया शिशुः भाषां कथं 'गृह्णाति' ? मातृभाषायाः अधिगमनं / ग्रहणं कथं भवति ? सम्यक् अवगमनाय, भेदं ज्ञातुं च प्रकृतं द्विधा पदप्रयोगं कुर्मः । विद्यालये या भाषा

अधीयते, तस्याः भाषायाः 'अध्ययनम्' 'अभ्यासः' इति, किञ्च गृहे मातृभाषारूपेण अथवा परिसरे श्रुत्वा श्रुत्वा च भाषायाः 'ग्रहणम्' 'अधिगमनम्' इति तद् द्वैविध्यम् । द्वयोः प्रक्रिययोः मध्ये भेदः अस्ति । भाषाग्रहणं सहजतया, परोक्षतया च भवति, भाषाभ्यासः प्रयत्नपूर्वकः, ज्ञानपूर्वकः च भवति । सर्वेभ्यः मानवेभ्यः स्वयमेव भाषाग्रहणस्य शक्तिः भगवता दत्ता अस्ति । किं देववाणी तया देवदत्तशक्त्या न 'ग्रहीतव्या' ?

शिशुः जन्मतः आरभ्य शृणोति, पश्यति च । 'माता' इति पदं शृणोति, मातरं पश्यति च, 'दुग्धं' 'कन्दुकम्' इत्यादीनि पदानि पुनः पुनः शृणोति, तानि वस्तूनि च पश्यति, 'ददामि' इति शृणोति, दानक्रियां पश्यति च । एवं श्रुतस्य ध्वनेः दृष्टस्य वस्तुनः क्रियायाः च सम्बन्धं मनसि कल्पयति, अनेन प्रकारेण शब्दार्थयोः ग्रहणं करोति । पुनश्च 'अहं गच्छामि' 'सः गच्छति' इत्यादिषु वाक्येषु यः भेदः अस्ति तं भेदम् अपि शिशुः भगवता दत्तया चिन्तनशक्त्या, तर्कशक्त्या च क्रमशः जानाति । एवं विना व्याख्यानेन, विना नियमाभ्यासेन च, स्वमेधया शिशुः मातृभाषां गृह्णाति ।

कक्ष्यायां नूतनायाः भाषायाः अभ्यासस्य सीमितः समयः, सीमिता पाठ्यसामग्री, सीमितं वातावरणम् इत्यादिरूपेण बह्व्यः सीमाः सन्ति चेत् शिशोः मातृभाषायाः ग्रहणाय समयसीमा नास्ति, जगतः प्रत्येकं वस्तु अपि पाठ्योपकरणं, बहवः शिक्षकाः, आदिनं भाषाश्रवण-संस्कारः (Language Exposure), प्रेम्णा वात्सल्येन च भाषां श्रावयन्ति वाचयितुं प्रयतन्ते च, एकमेव शब्दं दिनानि यावत् श्रावयन्ति, दोषभयं नास्ति, प्रतिदिनं प्रतिक्षणं नूतनानां पदानाम् अवगमनं भवति इत्यतः भाषायाः अधिगमनं नाम किञ्चन रुचिपूर्णं कार्यम् । परितः विद्यमानस्य जगतः परिचयसम्पादनस्य कुतूहलं, बुभुक्षापिपासादिकारणतः खाद्यपेयादीनां प्राप्त्यर्थं भाषाप्रयोगस्य

अनिवार्यता, शिशुसहजजिज्ञासा, तया भाषया शिशुः हसति, रोदिति, क्रीडति, क्रुध्यति च इति कारणतः तस्य मनसि भावनानाम् उत्पत्तिः अपि तया भाषया भवति इति एतानि सर्वाणि कारणानि मातृभाषायाः ग्रहणस्य वैशिष्ट्यानि । भाषाभ्यासस्य अत्युत्कृष्टा पद्धतिः एषा एव। किं जगतः सर्वश्रेष्ठभाषायाः 'ग्रहणम्' 'अभ्यासः' वा तया सर्वश्रेष्ठपद्धत्या एव न भवेत् ?

यदि वयम् अस्माकम् अपत्यानां मातृभाषां संस्कृतं कुर्मः, तेभ्यः अपत्येभ्यः मातृभाषारूपेण संस्कृतं दद्याम, तर्हि ततोऽपि महत्तरं भाग्यं, महत्तरां सम्पदं, महत्तरं ज्ञानं वा तेभ्यः किमन्यद् दातुं शक्नुयाम ! इतोऽपि महत्तरम् एतस्मिन् जगतीतले किमपि भवितुं न शक्यते । यत् सौभाग्यम् अस्माभिः न प्राप्तं तद् वयम् अस्माकम् अपत्येभ्यः दद्याम ।

श्रीमती श्रीविद्या विवाहसमये संस्कृतं न जानाति स्म । विवाहानन्तरं पतिः तया सह संस्कृतमातृभाषिपरम्परायाः विषये चर्चितवान् । विवाहानन्तरं स्वस्य भाषा शाश्वताय संस्कृतं भवेदिति सा स्वप्नेऽपि न चिन्तितवती आसीत् । परन्तु पत्युः ध्येयमेव स्वस्य ध्येयं, पत्युः आशाकांक्षास्वप्नाः एव स्वस्य आशाकांक्षास्वप्नाः, पत्युः इच्छाः एव स्वस्य इच्छाः इति या हृदयेन स्वीकृतवती तस्याः धर्मनिष्ठायाः इदानीन्तनं ससन्तोषम् आश्चर्यं नाम तस्याः द्विवर्षीया पुत्री चिन्मयी संस्कृतेन एव स्वप्नान् पश्यन्ती अस्ति इति । संस्कृतेन हसन्तीं, रुदतीं, क्रीडन्तीं च पुत्रीं दृष्ट्वा सा माता अन्याः मातृः वदन्ती अस्ति यत् सर्वाः अपि मातरः स्वीयानि अपत्यानि संस्कृतेन वर्धयितुं शक्नुवन्ति, तद् कार्यं कष्टाय नैव भवति इति । नागरत्ना-शान्तला-गौरी-वनिता-सावित्री-सीता-विजयादयः बह्व्यः मातरः याः स्वगृहे संस्कृतभाषां मातृभाषां कृत्वा नववंशपरम्परासर्जनं कृतवत्यः तासां सर्वासामपि अभिमतम् एतदेव यत् संस्कृतभाषया एव अपत्यानां वर्धनं अतिश्रेष्ठं

कार्यम् अस्ति, सरलं सहजम् आनन्दप्रदं च कार्यम् अस्ति इति ।

संस्कृतभाषिशिशूनां संख्यावर्धने मार्गावरोधाः पत्न्यः न, अपि तु अधिकतया पतयः एव । पतिः यदि मनः करोति तर्हि तत्र बहवः मार्गाः सन्ति । ('सङ्क्रमणम्' इति पुस्तके 'संस्कृतगृहम्' इति लेखः पठ्यताम्) यदा भारते विविधेषु राज्येषु अहं प्रवासं करोमि; तदा बह्व्यः युवतयः लभ्यन्ते याः संस्कृतगृहं कर्तुम् इच्छन्ति । परन्तु तादृशाः संस्कृतगृहाय कृतसङ्कल्पाः युवकाः विरलतया लभ्यन्ते । अतः युवकेषु मया एतदर्थं विशेषतया प्रार्थना क्रियते । गृहस्थाश्रमस्य अपि कश्चन उद्देशः भवतु । प्रजोत्पत्तेः अपि कश्चन पुण्यप्रदः उद्देशः भवतु । भगवतः समीपे संस्कृतसन्ततिः एव प्रार्थ्यताम् । एषः एव कालोचितः धर्मः ।

नवनिर्माणं नाम किम् ? संस्कृतमातृभाषिपरम्परानिर्माणं नवनिर्माणमेव । एतत् कार्यं संस्कृतभाषाविषयकान् सर्वान् भ्रमान् ध्वंसयिष्यति, अवरुद्धस्य भाषाप्रवाहस्य गतिरोधं भञ्जयित्वा पुनरपि भाषां प्रवाहयिष्यति । सहस्राधिकवर्षाणाम् अधोगतेः मार्गं परिवर्त्य उत्कर्षपथे गमयिष्यति । अवयानात् उत्थानं प्रति नोत्स्यति ।

कार्यम् इदं प्रधानमन्त्रिणः कार्यस्य अपेक्षया अपि महत्तरं, सहस्रचण्डीयागस्य अपेक्षया अपि अधिकं पुण्यप्रदं च । संस्कृतविश्वविद्यालयस्थापनापेक्षया अपि रचनात्मकतरं, विधायकतरं कार्यम् इदं प्रकृतं तु संस्कृतेन महाकाव्यरचनापेक्षया अपि अधिकं संस्कृतोपकारकम् - इति १९९३ तमे वर्षे काश्यां कश्चन वृद्धपण्डितः उक्तवान् आसीत् ।

एतदर्थं न धनव्ययः, न समयव्ययः, न वा शारीरकश्रमः करणीयः । मनः करणीयम्, तावदेव । आवश्यकता केवलस्य उन्मादस्य, संस्कृतोन्मादस्य, ध्येयोन्मादस्य च । संस्कृतम् एव जीवनं, संस्कृतेन एव जीवनं, संस्कृताय जीवनं, संस्कृतात्, संस्कृतस्य, संस्कृते

एव जीवनं, तदर्थं न दैन्यं न पलायनम् इति तादृशं जीवनं जीविष्यामि, साधयिष्यामि इति एतादृशेन अस्माकम् उन्मादेन एव मातुः सरस्वत्याः प्रमोदः भवेत् । एकैकः ध्येयनिष्ठः कार्यकर्ता चिन्तयेत् यत् संस्कृतमातृभाषिपरम्परोज्जीवनाय अहं कार्यं करिष्यामि, मम पुत्रः, पौत्रः, प्रपौत्रः, पुत्रप्रपौत्रः, पौत्रप्रपौत्रः, प्रपौत्रप्रपौत्रः इत्यादयः कार्यं करिष्यन्ति, अस्माभिः सप्तवंशपरम्परापर्यन्तं कार्यं करणीयं भविष्यति चेदपि तावत्पर्यन्तं कार्यं कृत्वा अपि भगवत्याः कार्यमिदं साध्यं साधनीयमेव ।

एतस्मिन् कार्ये क्लेशः केवलस्य सङ्कल्पस्य, दृढसङ्कल्पस्य । गृहे संस्कृतेन व्यवहारस्य 'starting trouble' भवति तावदेव । एकवारं प्रारम्भं करोतु, अनन्तरं तु शकटः स्वयम् एव अग्रे गच्छन् भविष्यति । 'मम विवाहः तु दशकात् पूर्वमेव जातं, दशकद्वयात् पूर्वमेव जातम्, अपत्यानि अपि इदानीं युवकत्वं प्राप्नुवन्ति सन्ति खलु' इति चिन्ता करणीया नास्ति । (न वा एतदर्थमेव अन्यः विवाहः करणीयः ।) अद्य एव, इदानीमेव गृहे भवान् सर्वैः सह संस्कृतेन व्यवहारस्य प्रारम्भं करोतु । 'उन्मत्तः' भवतु । शिष्टं भगवान् पश्यति ।

सर्वः अपि संस्कृतच्छात्रः, संस्कृतानुरागी च 'भारतीयजनानाम् आङ्ग्लमोहः अस्ति, सर्वे स्वसुतान् आङ्ग्लमाध्यमेन पाठयन्ति, गृहे आङ्ग्लभाषया एव वदन्ति' इत्यादिरूपेण असन्तोषं प्रकटयति । सः सर्वः अपि संस्कृतच्छात्रः, संस्कृतशिक्षकः, संस्कृतानुरागी च स्वस्मिन् विद्यमानस्य आङ्ग्लविरोधभावस्य स्थाने संस्कृतैक-प्रतिबद्धताभावं प्रतिष्ठापयतु, यावत्प्रमाणेन आङ्ग्लविरोधभाषणं करोति स्म, ततोऽप्यधिकप्रमाणेन संस्कृतेन भाषणस्य प्रारम्भं करोतु । संस्कृतमोहं दर्शयतु । अन्ये गृहे आङ्ग्लभाषया वदन्ति चेत् भवान् गृहे संस्कृतेन वदतु ! कुटिप्पणीकरणापेक्षया सुभाषणं

(संस्कृतभाषणं, संस्कृतेन भाषणं) वरं खलु !

केषाञ्चित् युवकानां मनस्सु 'यदि मम अपत्यम् अहं संस्कृतेन वर्धयेयं तर्हि मम मातृभाषायाः किं भवेत्, सः तां जानीयाद् उत न, मम पितृभ्यां श्वशुराभ्यां वा सह तस्य व्यवहारः कथं भवेद्, बन्धुभिः सह समरसत्वम् अनुभवेद् उत न, शिक्षायाः किं भवेत्' - इत्यादि-रूपेण प्रश्नाः भवन्ति । (परन्तु नर्सरीकक्ष्यातः आरभ्य इङ्ग्लिष्-भाषामाध्यमेन पाठने एते प्रश्नाः न भवन्ति, तादृशशिक्षणतः बालानां न आङ्ग्लभाषायां प्रभुत्वं, न वा भारतीयभाषायां, ते तु इतोभ्रष्टाः ततोभ्रष्टाश्च इति तु अन्यः विषयः ।) अद्यपर्यन्तम् अहम् उपदश संस्कृतमातृभाषिबालान् दृष्टवान्, तेषां गृहाणाम् अनुभवेन सधैर्यं वक्तुं शक्यते यत् उपरितनाः शङ्काः नैव कर्तव्याः इति । प्रत्युत भिन्नाः आश्चर्यजनकाः एव अनुभवाः सन्ति । यथा -

१. संस्कृतभाषाम् अन्यभाषाः इव (अन्यबालाः इव) बहु सम्यक् गृह्णन्ति, समानगत्या गृह्णन्ति च ।
२. बालाः संस्कृतज्ञानकारणेन इतरभाषाः अपि बहु शीघ्रं गृह्णन्ति ।
३. सामान्यतया एते उपदश अपि बुद्धिमन्तः एव दृष्टाः ।
४. भावनात्मकविकासः अपि सुष्ठु भवति ।
५. सर्वैः सह, इतरैः बालैः सह च सम्मिलिताः समरसाश्च भवन्ति इति ।

किञ्च विज्ञानानुसारं जन्मतः आरभ्य पञ्चदशवर्षपर्यन्तं षट् भाषाः ग्रहीतुं मानवस्य सहजं दैवदत्तं सामर्थ्यं भवति इति अयं सिद्धान्तः सर्वविदितः एव । मानवस्य एतां शक्तिं एल्.ए.डि. (Language Acquisition Device) इति वदन्ति ।

ये युवानः विवाहावस्थायां सन्ति ते तु अवश्यमेव संस्कृत-मातृभाषित्वं मनसि निधाय एव भाविनीं स्वजीवनरचनां कुर्युः, तदनुसारमेव स्वजीवनसहधर्मिण्याः चयनं कुर्युः । परन्तु जीवने ये

द्वित्राणि पदानि अग्रे गतवन्तः सन्ति ते अपि धर्मकर्मणः कृते विलम्बं न कुर्युः, नैवत्वापेक्षया विलम्बत्वम् अपि समीचीनतरं, शुभस्य शीघ्रम् इति इदानीमपि गृहे संस्कृतव्यवहारस्य प्रारम्भं कृत्वा जीवने नूतनस्य अध्यायस्य प्रारम्भं कुर्युः । जीवनस्य शेषसमयः वा संस्कृतमयः भवतु । अपत्यानाम् अपि 'जन्मतः' इति भाग्यं न जातं चेदपि 'बाल्यतः संस्कृतम्' इति सौभाग्यं तेभ्यः दातुं शक्नुयाम । तेन च न्यूनातिन्यूनम् अग्रे पौत्रदौहित्राणां मातृभाषा संस्कृतं भवेत् !

मातृभाषिपरम्परा पुनरुज्जीविता इति उदाहरणम् इतिहासे अन्यत् एकमात्रम् एव अस्ति । २३०० वर्षाणि यावत् हीब्रूभाषा (इस्त्रेल्देशस्य यहूदीयानां वा भाषा) दैनन्दिनव्यवहारे न आसीत् । हीब्रूभाषया क्रीडन्तः बालाः न आसन् । धर्मविषकचर्चासु, प्रार्थनामन्दिरेषु, प्रार्थनासु, धार्मिकग्रन्थरचनासु च केवलं हीब्रूप्रयोगः भवति स्म । परं १८९०तमे वर्षे गृहेषु हीब्रूभाषायाः व्यवहारेण हीब्रूपुनरुज्जीवनान्दोलनस्य प्रारम्भः अभवत् । १९२५ तमवर्षपर्यन्तं हीब्रूभाषा न केवलं पुनरुज्जीविता, अपि तु तदानीन्तनेन टर्कशासनेन (यत् शासनं यहूदीयानां हीब्रूभाषायाः च प्रतिकूलम् आसीत् तेन ।) राजभाषासु अन्यतमभाषात्वेन स्वीकृता । स्वीकरणीया अभवत् ! यतः तावती जाता हीब्रूभाषायाः प्रचुरता लोकप्रियता च । एतस्मिन् हीब्रूपुनरुज्जीवनान्दोलने प्रमुखभूमिकाभूतः आसीत्, मुख्यः आधारः आसीत्, समग्रस्य आन्दोलनस्य केन्द्रबिन्दुः आसीत् - हीब्रू-मातृभाषिपरम्परायाः पुनरुज्जीवनम् इत्यंशः । प्रत्येकं यहूदस्य श्रद्धा, विश्वासः, प्रतिबद्धता च आसीत् यत् इस्त्रेल्राष्ट्रस्य स्वातन्त्र्यं नवनिर्माणं च यावद् अनिवार्यं तावत् एव अनिवार्यम् अस्ति हीब्रू-मातृभाषिपरम्परायाः पुनरुज्जीवनं, तथा च द्वितीयस्य द्वारा एव प्रथमं साधयितुं शक्यते इति ।

संस्कृतेन मातृभाषया एव किमर्थं भवितव्यम् ? उत्तरम् अत्यन्तं

सरलम् । भारते विविधेषु राज्येषु मातृभाषाविषये यैः कारणैः आग्रहः क्रियते, भारताद् बहिः च भारतीयाः मातृभाषां मातृभाषारूपेण एव रक्षितुं यैः कारणैः प्रयत्नशीलाः सन्ति, तैः एव कारणैः संस्कृतमपि मातृभाषारूपेण तिष्ठेत् इति ।

मातृभाषा, प्रादेशिकभाषा, प्रथमभाषा, द्वितीयभाषा, विदेशीयभाषा, राजभाषा, सम्पर्कभाषा इत्यादिरूपेण याः विविधाः भाषाः सन्ति तासु सर्वासु अपि मातृभाषा एव सर्वश्रेष्ठा, सा एव प्रथमपूज्या, सुज्ञेया, अत्याज्या, नित्यप्रयोज्या च भवति । संस्कृतमपि मातृभाषा आसीत्, पुनरपि मातृभाषा भवेत् । लक्षशः, कोटिशः जनानां मातृभाषा भवेत् । भवेदेव ।

मातृभाषा अत्याज्या इति भवता एव उच्यते, पुनः इदानीं मम मातृभाषां त्यक्त्वा संस्कृतभाषां मातृभाषां करोतु इति भवान् वदति खलु इति कश्चन पृच्छेत् । सत्यम् । कस्मिंश्चित् राज्ये द्वित्रसहस्रपरिवाराः संस्कृतं स्वीयमातृभाषां करिष्यन्ति इति चिन्तयतु । तदा सा संख्या तस्याः प्रादेशिकभाषायाः ०.००१% अपि न भविष्यति इत्यतः तावता तस्याः प्रादेशिकभाषायाः न किमपि विनश्यति । परन्तु तेन लघुमात्रेणापि कार्येण न केवलं संस्कृतभाषायाः, अपि तु जगतः सर्वश्रेष्ठसभ्यतायाः, सर्वश्रेष्ठजीवनदर्शनस्य च उज्जीवनं भविष्यति । संस्कृतमातृभाषिपरम्परोज्जीवनं नाम भारतीयज्ञानपरम्परोज्जीवनम् । किं तदर्थं वयं तावदपि मूल्यं दातुं न सिद्धाः ? तावन्तं क्लेशं सोढुं न सिद्धाः ? संस्कृतमातुः तावतीं वा सेवां कर्तुं न सिद्धाः ? किं सर्वजनभाषिसंस्कृतस्य, प्रदीप्तभारतस्य च कल्पनामात्रेण भवतः रोमाञ्चनं न जायते ?

आगामिषु विंशत्यां त्रिंशति वा वर्षेषु भारतस्य सर्वेषु राज्येषु, जनपदेषु, मण्डलेषु, नगरेषु च संस्कृतमातृभाषिजनाः सृष्टाः भवेयुः ।

तदा देशे संस्कृतविषयकवायुमण्डलम् एव भिन्नं भविष्यति । ते अखिलभारतव्याप्ताः संस्कृतमातृभाषिजनाः, तेषाम् अपत्यानि च वेदान् शास्त्राणि च उद्धरेयुः । भारतस्य अतीतं वैभवं पुनः प्रतिष्ठापयेयुः ।

संस्कृतक्षेत्रस्य युवतियुवकानां मध्ये संस्कृतगृहविषये, संस्कृत-मातृभाषिशिशूनां विषये च चर्चा भवतु । महती चर्चा भवतु । स्वप्नाः च सन्तु । एतदर्थं सर्वे आचार्याः स्वशिष्यान् बोधयेयुः । कक्ष्यायां प्रेरयेयुः च । संस्कृतमातृभाषिपरम्परा काचित् अत्यन्तं महत्त्वपूर्णा राष्ट्रिया आवश्यकता ।

पूर्वं ग्रामे ग्रामे, नगरे नगरे, गृहे गृहे च कश्चन दीपः ज्वलति स्म । आ बहुभ्यः युगेभ्यः अविरतरूपेण ज्वलति स्म । तस्य दीपस्य प्रकाशेन एव भारतं जगद्गुरुः आसीत् । सः दीपः पुनः स्थाने स्थाने ज्वालनीयः अस्ति । किं वयं तस्य पुनर्ज्वालनाय वर्तिकाः तैलं च भवितुं शक्नुयाम ?



# ८. 'मैकाले'मानसिकतायाः बहिः आगच्छेम

पुणेनगरे भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरे ज्ञानसम्पदः नाशनस्य विध्वंसककृत्यं यद् जातं तस्य विवरणं वयं सम्भाषणसन्देशस्य माघमासीये अङ्के (फरवरी-२००४) पठितवन्तः। ततः पूर्वतने पुष्यमासीये अङ्के (जनवरी-२००४) प्रकाशितः 'विकृतचित्रणं विश्वगुरूणाम्' इति लेखः अपि पठितः स्यात् । न पठितः चेत् पठ्यताम् । तदा ज्ञायते कियन्तः जेम्स् लेनाः, मैकेल् विट्जेलाः च सन्तीति ! कीदृशम् अवाच्यं, हेयम्, असत्यं च ते लिखन्ति इति ! कीदृशाः विकृतमतयः ते इति !

आभाण्डारकरघटनं कश्चन विषयः मम मनः तुदति । संस्कृतसम्पदः एतादृशः विध्वंसः जातः, कथं देशस्य संस्कृतज्ञसमूहः तद्विरुध्य कश्चित् ध्वनिं न अकरोत् ? यदि संस्कृतज्ञानां देशव्यापि महत् सङ्घटनम् अभविष्यत् तर्हि निश्चयेन कश्चन शब्दः श्रावितः अभविष्यत् ।

एतस्मात् प्रसङ्गात् अस्माकं पाठाः के ?

अग्रे एतादृशाः प्रसङ्गाः यथा न स्युः तथा जनजागरणाय, ताडग्रन्थरूपेण विद्यमानायाः भारतीयबौद्धिकसम्पदः संरक्षणाय च संस्कृतज्ञानां देशव्यापिसङ्घटनं निर्मातव्यम् ।

संस्कृतस्य यादृशी अपि, या कापि वा हानिः जायते चेद् अनुक्षणं संस्कृतज्ञैः सामूहिकरूपेण विरोधः करणीयः, समाजजागरणं करणीयं, वैयक्तिकरूपेण वार्तापत्रेषु लेखनानि लेखितव्यानि, 'सम्पादकाय पत्रं' प्रेषणीयं च ।

विदेशतः संस्कृतपठनाय, 'इण्डालजि'पठनाय च ये आगच्छन्ति

तेषु सर्वे अपि सदुद्देशेन एव आगच्छन्ति इति नास्ति । अस्य जेम्स्लेनस्य उदाहरणं दृश्यताम् । बहूनां स्तम्भलेखकानाम् आशयः अस्ति यद् एषः जेम्स्लेनः शोधकार्यार्थं न आगतवान्, अपि तु हिन्दुसमाजस्य विघटनस्य, अश्रद्धोत्पादनस्य च दुरुद्देशेन आगतः आसीत् इति । पश्चात् सः क्षमायाचनं कृतवान् इति अत्र भारते वार्तापत्रे वार्ता आसीत् । परं यदा अहं तस्य वक्तव्यं पठितवान्, तदा ज्ञातवान् यत् तत्र तादृशाः केऽपि स्पष्टाः शब्दाः न आसन् एव । ततोऽप्यधिकं नाम, एतावतः कोलाहलस्य अनन्तरं सः 'लास् एञ्जलीस् टाइम्स्' इति दिनपत्रिकायां लेखे लिखति यत् - 'स्वेन पुस्तके सुष्ठु एव लिखितम् । प्रत्येकं विदुषा एतस्य पुस्तकस्य प्रतिकृतिद्वयं क्रेतव्यम्, एका स्वस्य कृते, अपरा ग्रन्थालयस्य कृते' इति ! कियत् तस्य धाष्टर्यम् इति चिन्त्यताम् । (सः तस्य पुस्तके 'शहाजिः' शिवाजेः वास्तविकः पिता नास्ति, गुरुः कोण्डदेवः समर्थरामदासः वा तस्य पिता स्यात् इत्यादिरूपेण निराधारम् असमीचीनतमं च बहुधा लिखितवान् ।)

'तेहलका'काण्डख्यातेः पत्रकारेण 'तेहलका'नाम्ना एका आङ्ग्लसाप्ताहिकी पत्रिका नूतनतया इदमिदानीम् आरब्धा अस्ति । तस्याः प्रथमाङ्के एकादशपृष्ठात्मकः मुखपृष्ठलेखः अस्ति यत्र अमेरिकायाः बुश्सर्वकारः भारते क्रैस्तमतप्रचाराय केन प्रकारेण साहाय्यं कुर्वन् अस्ति, केन उद्देशेन कुर्वन् अस्ति इत्यपि विस्तरेण लिखितमस्ति । तस्य लेखस्य पठनेन अपि ज्ञायते - कैः कैः व्याजैः वैदेशिकाः भारतम् आगच्छन्ति इति ।

कश्चन प्रसङ्गः मम स्मृतिपथम् आयाति । कदाचित् द्वयोः वैदेशिकसंस्कृतच्छात्रयोः 'वीसा'सम्बन्धे समस्या आसीत् । तयोः 'वीसा'कालावधिवर्धनाय अहं यदा भारतसर्वकारस्य गृह-मन्त्रालयस्य अधिकारिणां सम्पर्कं कृतवान् तदा ते अधिकारिणः

एतयोः द्वयोः विषये गुप्तचरविभागेन संगृहीतं वृत्तं यद् दर्शितवन्तः तद् दृष्ट्वा तदा अहं न केवलम् आश्चर्यचकितः, अपि तु मम मौर्ख्यविषये लज्जितोऽपि जातः ।

१९९७तमे वर्षे बेङ्गलूरुनगरे विश्वसंस्कृतसम्मेलनम् आसीत् । तत्र आगतेषु उपद्विसहस्त्रेषु प्रतिनिधिषु उपशताः वैदेशिकाः आसन् । सम्मेलनानन्तरं कश्चन ज्येष्ठः माम् उक्तवान् - ''अहो दौर्भाग्यम् ! अहो एतेषां संस्कृतज्ञानामपि मानसिकदास्यम् ! सम्मेलने बहवः भारतीयप्रतिनिधयः सर्वदा वैदेशिकान् परितः भवन्ति स्म, अथवा तेषां पृष्ठतः धावन्ति स्म ! जेम्स् लेन्सदृशान् वैदेशिकान् एव 'त्वमेव माता च पिता त्वमेव' इति इव स्तुवन्तः, मैकेल् विट्जेन् एव सर्वज्ञः इति मन्यमानाः अस्मदीयाः भारतीयाः इदानीं वा जागरिताः भवेयुः !'' इति ।

भण्डारकरघटनायाः अनन्तरं द्वित्रासु राष्ट्रस्तरीयासु आङ्ग्ल-भाषादैनिकपत्रिकासु तस्य संशोधनमन्दिरस्य विध्वंसनस्य दुष्कृत्यस्य खण्डनं कृत्वा सम्पादकीयं लिखितम् आसीत् । तदनन्तरं वामवादिविचारवतां पत्रिकावक्तव्यमपि आसीत् । तेषु सर्वेषु परोक्षतया धर्मपक्षधराणां, संस्कृतिपक्षधराणाम् अस्मादृशानां निन्दनमपि आसीत् । वयम् उभयतः अपि प्रताडनं प्राप्तवन्तः ।

यावत् अस्माकं सज्जनशक्तिः, सात्त्विकशक्तिः वा निष्क्रिया निस्तेजस्का च तिष्ठति तावत् वयं बलिपशवः भवन्तः स्याम । किञ्च क्रमशः कालकवलीभूय इतिहासविषयाः भवेम अपि ।

यदि केचन रुष्टाः अभवन्, यदि तैः आक्रमणं करणीयम् एव आसीत् तर्हि तैः तत् आक्रमणं करणीयम् आसीत्, तत्पुस्तकप्रकाशकस्य 'आक्सफर्ड्युनिवर्सिटिप्रेस्' उपरि, न तु भाण्डारकरसंशोधनमन्दिरस्य उपरि । (वयं तु हिंसापक्षे एव न स्मः इति तु अन्यः विषयः ।) अन्ते जातं किम् ? निरपराधिनः कृतोपकाराः

प्रताडिताः, प्राप्तोपकारः लेखकः तु अमेरिकायां सुखेन तिष्ठति ! प्राप्तधनलाभः प्रकाशकः इतोऽप्यतिशयं धनलाभं प्राप्नुवन् अस्पृष्टः अबाधितश्च सन् उन्मुक्तः अत्रैव भारते अस्ति ।

एतादृशी एव अन्या अपि काचित् घटना प्रवृत्ता ।

डा० पोल् बि कोठरैट् अमेरिकायां जोर्जियाराज्ये एमरिविश्वविद्यालये धर्मशास्त्रविभागे (Department of Religions) प्राध्यापकः । तेन 'गणेश' इति किञ्चित् पुस्तकं लिखितम्, यस्य मुखपृष्ठे नग्नस्य गणेशस्य चित्रम्, अन्तः 'गणेशस्य पिता शिवः स्त्रीलोलुपः आसीत्, गणेशस्य शुण्डा तस्य कर्तितस्य जननाङ्गस्य प्रतीकम् अस्ति, पार्वत्यां गणेशस्य कामवासना आसीत्, गणेशः...... इच्छति !' इत्यादिरूपेण मलिनं वर्णितम् अस्ति । (सम्भाषणसन्देशः - जनवरी, २००४) अस्य पुस्तकस्य भारतीया आवृत्तिः २००१ तमे वर्षे एव सुप्रसिद्धया 'मोतिलाल-बनारसीदास'संस्थया प्रकाशिता । इदानीं वर्षद्वयानन्तरं यदा अमेरिकायां निवसन्तः हिन्दवः एतस्य पुस्तकस्य विरोधं कृतवन्तः तदा मोतिलालबनारसीदाससंस्थया तद् पुस्तकं प्रतिस्वीकृतम् इति घोषितम् । परं वर्षद्वयं यावत् भारते कथं वा जनाः कुपुस्तकमिदम् असहन्त ?

अद्यत्वे पुस्तकप्रकाशनसंस्थानां निष्ठा कथं परिवर्तमाना अस्ति इत्येतदपि विचारणीयं भवति । संस्कृतसंस्कृतिसम्बन्धिपुस्तकानां प्रकाशने अग्रेसर्याः दिल्लीनगरे मुख्यकार्यालयं वहन्त्याः सुप्रसिद्धायाः कस्याश्चित् प्रकाशनसंस्थायाः विषये कश्चन वयोवृद्धः, विख्यातः महान् च संस्कृतविद्वान् उक्तवान् - 'आसीत् कश्चन कालः यदा अस्याः संस्थायाः संस्कृतनिष्ठता आसीत् । अद्यत्वे सा निष्ठा लुप्ता । तस्याः स्थाने आंग्लनिष्ठा, श्वेतकायनिष्ठा, येन केन प्रकारेण धनार्जननिष्ठा च दृश्यन्ते' इति ।

अन्यः कश्चन संस्कृतज्ञः, यः विश्वसंस्कृतसम्मेलनानि गच्छति सः तस्याः एव प्रकाशनसंस्थायाः विषये स्वेन प्रत्यक्षं यद् दृष्टं तत् उक्तवान् - 'कश्चन सामान्यः श्वेतकायः आङ्ग्लभाषया (सा तु तस्य मातृभाषा) किञ्चित् पुस्तकं विरचय्य प्रकाशनाय अस्यै संस्थायै ददाति, किञ्च तस्य प्रकाशनाय पञ्चशतं डालर्स्मितं धनमपि ददाति । (वैदेशिकस्य कृते तु पञ्चशतं डालर्स् तु पञ्चशतं रूप्यकाणि इव । परम् अत्र तावतः धनराशेः मूल्यं भवति प्रायः पञ्चविंशतिसहस्रं रूप्यकाणि ।) तेन धनराशिना पुस्तकस्य पञ्चशतं प्रतिकृतीः प्रकाशकः मुद्रयितुं शक्नोति । वैदेशिकस्य दृष्ट्या तु सुविख्याता एषा प्रकाशनसंस्था पुस्तकं प्रकाशयति इत्येषः तस्य प्रतिष्ठावृद्धेः विषयः । प्रकाशनावसरे सामान्यतया मुद्रणव्ययः यः भवति तस्य पञ्चगुणम् अधिकं ग्रन्थमूल्यं निर्धारयति वाणिज्यप्रकाशकः । (मूल्यम् अधिकं चेदेव पुस्तकस्य महत्त्वम् अधिकं खलु !) प्रतिष्ठितप्रकाशन-संस्थायाः पुस्तकानि विश्वविद्यालयग्रन्थालयेभ्यः सरलतया विक्रीयन्ते च । एवं प्रकाशकः उभयतः अपि धनं सम्पादयति । विश्वसंस्कृत-सम्मेलनावसरे तत्र विद्यमानेषु पुस्तकापणेषु कञ्चित् कालं यावत् स्थीयते चेत् एतादृशानि बहूनि 'डील्स्' द्रष्टुं शक्यन्ते' इति ।

देहल्यां कनाट् प्लेस् इत्यत्र विद्यमानस्य कस्यचन प्रतिष्ठितपुस्तकापणस्य स्वामी उक्तवान् - ''पूर्वोक्तप्रकाशनसंस्थायाः अधिकांशप्रकाशनानि वैदेशिकलेखकानामेव भवन्ति, यतः धनिकाः जनाः स्वगृहस्य 'शोकेस्'मध्ये आङ्ग्लभाषया लिखितस्य वैदेशिकलेखकस्य प्राचीनभारतसम्बन्धिनः पुस्तकस्य स्थापनं प्रतिष्ठास्थानम् इति मन्यन्ते । तस्याः मानसिकदास्यस्य लाभं स्वीकुर्वन्ति एतादृशाः प्रकाशकाः'' इति ।

सर्वे वैदेशिकाः असमीचीनाः इति अत्र मम कथनस्य तात्पर्यं नास्ति । परं बहूनां विषये विप्रतिपत्तिः अस्ति, बहूनाम् उद्देशाः

असमीचीनाः, लेखनान्यपि असमीचीनानि, अतः अस्माभिः सावधानैः भाव्यम्, 'वैदेशिकाः महान्तः' इति दासभावः नापेक्षितः, 'तैः कथितमेव प्रमाणम्' इति चिन्तनीयं नास्ति इति तावदेव । डेविड्फ्रालिसदृशाः यथार्थलेखकाः, निवेदितासदृशसेवकसेविकाः च बहवः सन्ति इति वयं जानीमः ।

मध्यप्रदेशस्य किञ्चिद् उदाहरणं दृश्यताम् - उज्जयिन्याम् आगामिमासे यः कुम्भमेलः भविष्यति तस्य स्थिरचित्राणि स्वीकृत्य पुस्तकरूपेण प्रकाशनाय कश्चन इङ्ग्लण्ड्देशीयः आङ्ग्लक्रैस्तव-चित्रग्राहकः, किञ्च काचित् तद्देशीया वाणिज्यसंस्था च प्रार्थिते - बहुलक्षरूप्यकाणां प्रदानस्य आश्वासनेन सह, मध्यप्रदेशस्य पूर्वतनेन द्विग्विजयसिंहसर्वकारेण । किं भारतीयचित्रग्राहकाः योग्याः न सन्ति ? अत्रत्यसंस्कृतेः अवगमनं येषां नास्ति, किं ते योग्यं चित्रणं कर्तुं शक्नुयुः ? किं वयं जानीमः यत् एतादृशाः चित्रग्राहकाः कीदृशेषु चित्रेषु आसक्ताः, किञ्च एते अद्यपर्यन्तं विदेशेषु भारतस्य कीदृशं विकृतचित्रणं कृतवन्तः इति ? सर्वस्य मूलम् अस्ति आङ्ग्लश्वेतव्यामोहः, आत्महीनभावश्च ।

राष्ट्राभिमानः जागरयितव्यः चेत् तत् कार्यं भारतीयभाषाणां भारतीयलेखकानां च द्वारा एव साधनीयं भवेत् । अद्यापि बहुषु विश्वविद्यालयेषु संस्कृतस्य स्नातकोत्तरपाठ्यक्रमे Vedic Reader सदृशानि वैदेशिकैः लिखितानि पुस्तकानि एव सन्ति । एतेन श्रद्धाभिमानप्रेरणानिर्माणं शक्यं नास्ति ।

मेकाले यदा भारते आङ्ग्लशिक्षणव्यवस्थाम् आरब्धवान् तदा तस्य उद्देशः सः एव आसीत् यत् अत्र भारतीयचर्मवताम् आङ्ग्लमानसिकतासहितानां जनानां निर्माणं करणीयम् इति । विश्वेन सह व्यवहर्तुं, किञ्च आङ्ग्ललेखनैः निर्मितं, निर्मीयमाणं च कालुष्यं विकृतीः च निर्मूलयितुं वयं सर्वे संस्कृतच्छात्राः संस्कृतशिक्षकाः

आङ्ग्लभाषायाः सुष्ठु एव अभ्यासं कुर्याम । परम् आङ्ग्लमोहः न, आङ्ग्लाभिमानः न, आङ्ग्लाराधनं न, आङ्ग्लभाषापूजा न, आङ्ग्लेयानां विषये अस्माकम् अन्धता अपि न। प्रथमं वयं संस्कृतज्ञाः स्वयं 'मेकाले'मानसिकतायाः बहिः आगच्छेम । महर्षिगिरा वदेम, महर्षिपरम्परां वर्धयेम च ।

महात्मा गान्धिः १९१२तमे वर्षे सितम्बरपञ्चमदिनाङ्के स्वस्य पुत्राय हरिलालगान्धेः कृते पत्रद्वारा फ्रेञ्च्भाषाशिक्षणस्य स्थाने संस्कृतं पठितुं सूचनां दत्तवान् आसीत् । सः लिखितवान् आसीत् - 'संस्कृतस्य ज्ञानेन सर्वासां भारतीयभाषाणां पठनस्य द्वारम् उद्घाटितं भवति । तद् (द्वारम्) भवान् स्वयमेव स्वहस्ताभ्यां पिहितवान् अस्ति । भवान् पुनरपि फ्रेञ्च्भाषायाः चर्चाम् आरब्धवान् अस्ति । अतः एतावद् लिखन् अस्मि । भवान् इदानीमपि सम्यक् चिन्तनं कृत्वा एकं वर्षं यावत् परीक्षालेखनस्य विचारं परित्यजतु, तथा च संस्कृतं पठतु । किञ्च तत्सम्बन्धे स्वस्य अभ्यासाय (संस्कृताभ्यासाय) सप्त-रूप्यकाणां स्थाने अष्टरूप्यकाणां व्ययं करोति चेत् अपि मम प्रसन्नता भवेत् ।'

महात्मनः गान्धेः एतद् पत्रम् अद्यापि कियत् औचित्यपूर्णं, प्रासङ्गिकं, कालोचितं च !

❑❑